च, व्युत्सृजतीत्युत्तरेण योगः, तत्राशनं शाल्यादि मुद्रादि सक्तुकादि पेयादि मोदकादि क्षीरादि सूरणादि मंडकादि च, आशु–शीघ्रं क्षुधं शमतीत्यशनं, यदाहुः–"असणं मोअगसत्तुगमुग्गजगाराइ खज्जगविही य। खीराई सूरणाई मंडगपभिई य विन्नेयं ॥१॥"तथा पानं–प्राणानामिन्द्रियादीनामुपग्रहे–उपकारे यत् प्रवर्तते तत् पानं, तच्चेदं–सोवीरं जवादिधोवनं सुरादि सर्वश्चाप्कायः कर्कटजलादि च, यदाहुः–पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव। आउकाओ सव्वो कक्कडगजलाइयं च तहा ॥१॥ तथा च खादिमं, खे–मुखाकाशे मातीति खादिमं, तच्चेदं खादिमं–भृष्टधान्यगुडतिलपर्पटिकाखर्जूरनालिकेरद्राक्षाकर्कोटकाम्रपनसादि, यदाहुः–"भत्तोसं दंताइ खज्जूरंनालिकेरदक्खाई। अंबगफणसाइ तहा बहुविहं खाइमं नेयं ॥१॥ अथ स्वादिमं, स्वादयति गुणान् रसानिति स्वादिमं, तच्चेदं–दन्तकाष्ठताम्बूलतुलसिकापिंडार्जगमधुपिप्पलिसुंठीमिरचजीरकहरितकीआमलकादि, यदाहुः–"दंतवणं तंबोलं चित्तं तुलसी कुहेगाईयं। महुपिप्पलिसुंठाई अणेगहा साइमं नेयं ॥१॥" चत्वारोऽमी आहाराः, भणितं चागमे–असणं पाणगं चेव, खाइमं साइमं तहा। एसो आहारविही, चउव्विहो होइ नायव्वो ॥१॥ अनाहाराश्चैते–निंबत्वक्करक्षाखदिरतिक्तकादीन्यनेकानि द्रव्याण्यनाहाराणि भवन्ति, अत्र नियमभंगभयात् आकारावाह–अन्नत्थऽणाभोगेणं सहसागारेणं अत्र पंचम्यर्थे तृतीया, अन्यत्रानाभोगात्, अनाभोगः–अत्यन्तविस्मृतिः सहसाकारात् च, सहसाकारो गवादिकं दुहतो तापयतो वा घृतादिकं मुखे सहसा छटायाः प्रवेशः, ताभ्यामन्यत्र प्रत्याख्यानं, इदं चतुर्विधाहारस्यैव मुहूर्तमात्रमेव भवति इत्याम्नायः, रात्रिभोजनविरमणव्रततीरणरूपत्वादस्य, नमस्कारसहितस्य चायमर्थः–मुहूर्तात् परतो नमस्कारोच्चारणे पूर्यते, मुहूर्तं द्विघटिकामानं, तदनुच्चारणे सूर्यास्तसमयेऽपि न पूर्यते, मुहूर्ताभ्यन्तरे नमस्कारोच्चारणेऽपि न पूर्यते ॥१॥ (आकारषट्कयुतं पौरुषी) तत्सूत्रं चेदं–पोरसिअं पच्चक्खाइ उग्गए सूरे दुविहं

यथार्थयुगप्रधानश्रीकालकाचार्यान्वयिभिः श्रीभावदेवसूरिभिः संदृब्धा श्रीमद्भिर्मतिसागरसूरिभिर्विवृता.

# श्रीयतिदिनचर्या



मुद्रयित्री—श्रीजामनगरवास्तव्यश्राद्धवर्यश्रीलक्ष्मीचंदधारशीवोरासुपुत्रश्राद्धवर्यश्रीचुनीलालविहितार्थसाहाय्येन मालव-देशान्तर्गतरत्नपुरीयश्रीऋषभदेवजीकेशरीमलजीनाम्नी श्वेतांबरसंस्था ।

मुद्रयिता—श्रीफकीरचन्द मगनलाल बदामी, स्वकीये 'श्रीजैनविजयानन्द' प्रीन्टींग प्रेस (कणपीठबजार, सुरत.) इति यन्त्रालये मुद्रिता

આ ગ્રન્થ આચાર્ય શ્રી સાગરાનંદ સૂરીશ્વરજી મહારાજના વરદ હસ્તે ઉ. શ્રી માણેકસાગરજી ગણિ, ઉ. શ્રી કુમુદવિજયજી ગણિ પં. શ્રી ભક્તિવિજયજી ગણિ, તથા પં. શ્રી પુષ્પવિજયજી ગણિના આચાર્યપદાર્પણ મહોત્સવ પ્રસંગે, જામનગર નિવાસી શેઠ પોપટલાલ ધારશીભાઇ તરફથી ભેટ.—

च प्रत्युपेक्षन्ते परमुपविष्टाः ॥ कानि पात्रादीनीत्याह—

**पत्तं पत्ताबन्धो पायट्ठवणं च पायकेसरिया। पडलाइं रयत्ताणं गोच्छओ पायनिज्जोगो ॥९३॥**

तथा पात्रं—भाजनं पात्रबंधो—झोलिका पात्रस्थापनमूर्णामयं, च पुनः पात्रकेसरिका—पात्रप्रलेखिनी, क्षौमिकी मुखवस्त्रिकेत्यर्थः, पडलानि सौत्राणि जघन्यमध्यमोत्कृष्टरूपाणि, रजस्त्राणं—पात्रवेष्टनं, गोच्छकः ऊर्णानिष्पन्नः, पात्रनिर्योगः—पात्रपरिकरः, यदाहुः—"तिन्नि विहत्थी चउरंगुलं च भाणस्स मज्झिमपमाणं। इत्तो हीण जहन्नं अइरेगतरं तु उक्कोसं ॥१॥" तथा श्रीआचारांगवृत्तिः—"पात्रं त्रेधा—लाउपायं वा १ दारुपायं वा २ मट्टियापायं वा ३" इति, तथा पात्रबंधप्रमाणं यदाहुः—"पत्ताबंधपमाणं भायणमाणेण होइ कायव्वं। जह गंठिंमि कयंमी कोणा चउरंगुला हुंति ॥१॥" तथा पात्रकस्थापनादीनां प्रमाणं—पत्तगठवणं तह गुच्छओ य पायपडिलेहिणी चेव। तिण्हंपि हुप्पमाणं विहत्थि चउरंगुलं चेव ॥१॥ पात्रकेसरिका उक्तैव, उक्तं च—"पायपमज्जणहेउं केसरिया सा पुणो भवे एक्का। गुच्छगपत्तट्ठवणं एक्केक्कं गणणसाणेणं ॥१॥" अथ पटलानां प्रमाणं, यदाहुः—"कयलीगब्भदलसमा पडला उक्किट्ठमज्झिमजहन्ना। गिम्हे हेमंतंमि वासासु अ पाणरक्खट्ठा ॥१॥ तिन्नि चउ पंच गिम्हे चउरो पंच च्छगं च हेमन्ते। पंच छ सत्त वासासु हुंति घणमसिणरूवा ते ॥१॥" अर्थस्तु यन्त्रादवसेयः।

| उष्ण | ज. २ | म. ४ | उ. ५ |
|---|---|---|---|
| शीत | ४ | ५ | ६ |
| वर्षा | ५ | ६ | ७ |

अथ पटलानां प्रमाणमाह—अड्ढाइज्जा हत्था दीहा छत्तीसअंगुले रुंदा। बीअं पडिग्गहाउ ससरीराउ प्पमाणेणं ॥१॥ तथा रजस्त्राणमानमाह—माणं तु रयत्ताणे भाणपमाणेण होइ कायव्वं। पायाहिणं कुणंतं मज्झे चउरंगुलं कमइ ॥१॥ गुच्छक उक्तार्थः, एष पात्रनिर्योगः—पात्रपरिकरः ॥९३॥ तथा ग्रंथकृत् संप्रति पडलानां स्वरूपमाह—

## श्रीभावदेवसूत्रिताया यतिदिनचर्याया उपक्रमः

ऐदंयुगीनेषु न कोऽपि जैनः युगप्रधानोत्तमश्रीकालकाचार्याणामभिधानस्याज्ञः, तेषामेवातिविश्रुततमानामन्वयोत्था एते श्रीयतिदिनचर्याया विधायकाः सूरिवर्याः श्रीभावदेवाभिधाः, यद्यपि साधूनामहोरात्रचर्या श्रीओघनिर्युक्त्युत्तराध्ययनादिषु न्यस्ता सानुक्रमा तथापि विहारादिसामाचार्यादिना गुपिलेति केवला साधुदिनचर्या प्राभातिकजागरणादारभ्य संस्तारकविधिपर्यवसाना स्पष्टरूपा निबद्धा पूज्यैरस्यां, यद्यपि पूज्यतमैः श्रीदेवसूरिभिर्विहिता यतिदिनचर्या, विस्तृता परं सेति संक्षिप्तरुचीनामुपयुक्ततमैषेति निश्चित्य मुद्रितैषा, विवृत्तिरपि श्रीमद्भिर्मतिसागरैर्विहिता लघ्वीति साऽपि सहैवानया मुद्रिता, सफलयन्तु च सज्जना अनुष्ठायैतदुक्तं परिश्रममस्मदीयमिति शम्। आनन्दसागराः शीहोर (सिंहपुरं)

श्रीवीरसंवत् २४६३ फाल्गुन कृष्णा प्रतिपद्

पूर्वार्धम् सप्त, मुनिसहिताश्चतुर्दश १४, सार्धपौरुषी नंदाष्टबाहु २८९ ध्रुवांके भाज्ये पूर्वांकेन भागः, लब्धं त्रिंशतिः २०,

| | | | |
|---|---|---|---|
| पोसे अंगुल | १२ | पोष | ९ |
| माघे अंगुल | १० | माघ | ८ |
| फाल्गुने अंगुल | ८ | फाल्गुन | ७ |
| चैत्रे अंगुल | ६ | चैत्र | ६ |
| वैशाखे अंगुल | ४ | वैशाख | ५ |
| ज्येष्ठे अंगुल | २ | ज्येष्ठ | ४ |
| आषाढ अंगुल | ० | आषाढ | ३ |
| श्रावणे अंगुल | २ | श्रावण | ४ |
| भाद्रवे अंगुल | ४ | भाद्रपद | ५ |
| आसो अंगुल | ६ | आसो | ६ |
| कार्तिके अंगुल | ८ | कार्तिक | ७ |
| मार्गसिरे अंगुल | १० | मार्गसिर | ८ |

एतन्नयनविहीनं—उभयहीनं, स्थितमष्टादश १८, एतच्च दलीकृतं स्थितं ९ नव, एवं गत घटी ९ पल ८, एवं यथार्हं कल्पना कार्या ॥ ६० ॥ दिनगतशेषप्रस्तावात् सार्द्धपौरुषीमप्याह—

पोसे पोरसि सड्ढा नवपयपमाण देहच्छायाए। 
पय इक्किक्का हाणी जा आसाढे पया तिन्नि ॥६१॥

पौसे मासि नवपदप्रमाणया देहच्छायया सार्द्धपौरुषी भवति, ततः पौषतः एकैकपदहान्या यावदाषाढे त्रिपदा भवति—चरणत्रयरूपा छाया भवति, ततोऽप्येकैकपादवृद्ध्या प्रतिमासं यावत् पौषे पुनर्नव पादाः, एवं सार्द्धपौरुषी भणिता ॥ उक्तं च—"तणुछायाए नवहिं पएहिं पोसंमि पोरिसी सड्ढा। इक्किके पयहरणे जा आसाढे पया तिन्नि ॥१॥ अड्ढाइज्ज़दिणेहिं इक्किकं अंगुलं चडइ पडइ। आसाढाओ पोसो पोसाओ जाव आसाढो ॥२॥ तथेह प्रस्तावात् पुरिमार्द्धमप्याह—पोसे विहत्थि छाया बारसअंगुल पमाणपुरिसस्स। मासि दुअंगु-

युगप्रधानश्रीकालिकाचार्यसंतानीयश्रीभावदेवसूरिसंकलिता श्रीमतिसागरसूत्रितावचूर्णियुता

# श्रीयतिदिनचर्या

प्रणम्य जगदानन्दवृन्दकन्दकदं जिनम् । श्रीपार्श्वं दिनचर्याया, वक्ष्ये व्याख्यां ससूत्रगाम् ॥ १ ॥

शान्ति तनोतु सततं कृतपापशान्तिः, शान्तिर्जिनोऽघजलसन्ततिसागरात्रिः ।
ख्यातिः क्षितौ क्षितिपतौ किल यस्य लोके, धर्माद्धिये च भुवि गर्जति संप्रतीयम् ॥२॥

यत्राभूद् गणभृत् प्रभावनिधिभृत् केशी प्रदेशीलसत्सत्सम्यक्त्वगुणाप्तिज्ञप्तिपदकृत् स्वर्गार्द्धिसंयच्छकः ।
तस्यैतद्दिनकृत्यमेतदखिलं गच्छस्य चान्यस्य च, व्याख्यां बोधिनिबन्धनं गणिवरस्याहं नये सूत्रतः ॥३॥

अथार्या–दिनचर्यां श्रुतधुर्यां कृतवान् श्रीभावदेवसूरिवरः । सुकरां तनुते रम्यां मतिसागर एष तद्वर्त्ती ॥४॥

अथ ग्रन्थस्याद्यगाथां सनमस्कारां विवृणोति—

**वीरं नमिऊण जिणं सुआणुसारेण सुद्धभावेण । वुच्छामि समासेणं सामायारिं जईण हियं ॥१॥**

अहं 'सामाचारीं' सम्यक् आचर्यते–क्रियते सामाचारी तां वक्ष्यामि–कथयिष्यामि, केन ?–समासेन–संक्षेपेण, न तु विस्त-

॥६२॥ अथ चैत्यनमस्करणप्रस्तावात् साधोः कियन्ति चैत्यवन्दनानि इत्याह—

**पडिकमणे चेइहरे भोअणसमयंमि तहय संवरणे। पडिकमण सुअण पडिबोहकालियं[इय]सत्तहा जहणो ६३**

साधोः प्रथमा चैत्यवंदना प्रतिक्रमणे–रात्रिप्रतिक्रमणे १ द्वितीया चैत्यगृहे–जिनभवने २ तृतीया भोजनसमये–चारवेलायां ३ चतुर्थी संवरणे–कृतभोजनः साधुः सततं चैत्यवंदनं करोति ४ तथा पंचमी प्रतिक्रमणे–दैवसिकप्रतिक्रमणे ५ षष्ठी शयने–संस्तारककरणसमये ६ सप्तमी प्रतिबोधकाले–निद्रापरित्यागे ७, एताः सप्त चैत्यवन्दना यतिनो ज्ञातव्याः, यदाहुः–साहूणं सत्त वारा होइ अहोरत्तमज्झयारंमि। गिहिणो पुण चियवंदण तिय पंच य सत्त वा वारा ॥१॥ पडिकमओ गिहिणोऽविहु सत्तविहं पंचहा उ इयरस्स। होइ जहन्नेण पुणो तीसुवि संझासु इय तिविहं ॥२॥" ॥६३॥ अथ तस्याश्चैत्यवंदनाया जघन्यादयः कियन्तो भेदा इत्याशंक्याह—

**नवकारेण जहन्ना दंडगथुइजुअल मज्झिमा नेया। उक्कोसा विहिपुव्वं सक्कत्थयपंचनिम्माया ॥६४॥**

नमस्कारः–प्रणामस्तेन जघन्या चैत्यवन्दना, नमस्कारः पंचधा–एकांगः शिरसो नामे, द्व्यंगस्तु करयोर्द्वयोः। अंगत्रयाणां नमने, करयोः शिरसस्तथा ॥१॥ चतुर्णां करयोर्जान्वोर्नमने चतुरंगकः। शिरसः करयोर्जान्वोः, पंचांगः पञ्चमो मतः ॥२॥ यद्वा श्लोकादिरूपनमस्कारादिभिर्जघन्या १, अतो मध्यमा द्वितीया, सा तु स्थापनार्हत्सूत्रदंडकैकस्तुतिरूपेण युगलेन भवति, अन्ये तु दंडकानां–शक्रस्तवादीनां पंचकं तथा स्तुतियुगलं–समयभाषया स्तुतिचतुष्टयं ताभ्यां या वन्दना तामाहुः, यद्वा दंडकः–शक्रस्तवः स्तुत्योर्युगलं–अरिहंतचेइयाणं स्तुतिश्चेति, यतः आवश्यकचूर्णौ स्थापनार्हत्स्तवचतुर्विंशतिस्तवश्रुतस्तवाः स्तुतयः प्रोक्ताः, एते

रेण, कथंभूतां ?—यतिहितां—संयमिनां हितकारिणीं, किं कृत्वा ?—वीरं नमस्कृत्य—वर्द्धमानं प्रणम्य, विशेषेण ईरयति—प्रेरयति अष्ट कर्माणि ज्ञानावरणीयादीनीति वीरस्तं, त्रैशलेयमित्यर्थः, पुनः केनः ?—श्रुतानुसारेण—आगमानुक्रमेण, कथं ?, तथा शुद्धभावेन—मनोवचनकायनैर्मल्येन ॥१॥ तत्र जाग्रद् दिष्ट्या तस्मान्मुनी रात्रौ कथं जागर्तीत्याह—

**जग्गइ सव्वोऽवि मुणी पच्छिम जामे निसाय पभणंतो। परमिट्ठिनमुक्कारं समरइ देवगुरुतित्थाइं ॥२॥**

सर्वोऽपि मुनिः—सकलोऽपि साधुवर्गः निशायाः—निशीथिन्याः पश्चिमयामे—अन्तिमनिशीथे जागर्ति—निद्रात्यागं करोति, निद्रात्यागे कृते को लाभः ?—'जइ चउदसपुव्वधरो वसइ निगोए अणंतयं कालं। निद्दाइपमायाओ ता होहिसि कह तुमं ? जीव ! ॥१॥' किं कुर्वन् ?—परमेष्ठिनमस्कारं भणन्—पञ्चनमस्कारमंगलं पठन्, ततोऽपि किं करोति ?—देवगुरुतीर्थानि स्मरति—चिन्तयति, तत्र देवाः—वीतरागाः गुरवः—तत्त्वोपदेशकाः तीर्थानि—सिद्धक्षेत्रादीनि, इह चागमे निद्राः पञ्च, यथा—निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धिका च ५, यदाहुः—सुहपडिबोहा निद्दा निद्दानिद्दा य दुक्खपडिबोहा। पयला ठिओवविट्ठस्स पयलपयला य चंकमओ ॥ १ ॥ दिणचिंतियत्थकरणी थीणद्धी अद्धचाकिअद्धबला" इति ॥ २ ॥ तत्र कृतनिद्रापरित्यागो मुनिः किं किं चिन्तयतीत्याह—

**किं नायरामि किच्चं ? किं कयमहियं ? अभिग्गहो को वा ?। अप्पा परोऽवि पासइ किं मह ? इय चिंतइ महप्पा ॥३॥**

तथेह साधुरिदं चिन्तयति, अहं किं कृत्यं नाचरामि—किं धर्मकार्यं न करोमि ?, मया अधिकं धर्मकृत्यं किं कृतं—किमाचरितं वा ?, अथवा मम कोऽभिग्रहो—नियमविशेषः, नियमस्य प्रतिरूपादिषु चतुर्दशगुणेषु विद्यमानत्वात्, यदाहुः—पडिरूवो तेयस्सी"-

।७३। अथ पिंडप्रस्तावात् द्विचत्वारिंशद्दोषान् (व्याचिख्यासुः उद्गमदोषान्) गाथायुगलेनाह—

आहाकम्मु १ द्देसिय २ पूईकम्मे अ ३ मीसजाए य ४ ।
ठवणा ५ पाहुडियाए ६ पाओअर ७ कीअ ८ पामिच्चे ९ ॥७४॥
परिअट्टिए अ १० अभिहडु ११ ब्भिन्ने १२ मालोहडे अ १३ अच्छिज्जे १४ ।
अणिसिट्ठ १५ ऽज्झोअरए १६ सोलस पिंडुग्गमे दोसा ॥७५॥

तत्र आधाकर्मादयः षोडशोद्गमदोषाः, यथा आधाकर्म—आधाय साधून् षड्जीवनिकायविराधनादिना पापक्रिया, निरुक्तात् यलोपः, १ द्वितीयमौद्देशिकं तदेवं-यावंतिकादीनुद्दिश्य कृतमौद्देशिकं २ तृतीयं पूतिर्वा, अपवित्रकर्मकरणमित्यर्थः तद्योगात् पूतिकर्म, चः समुच्चये, ३ चतुर्थं मिश्रजातं—किंचिद् गृहियोग्यं किंचित् साधूनामपि ४ पंचमं स्थापना, साधुदानाय पृथग्भाजने स्थाप्यते ५ तथा षष्ठं प्राभृतिकाख्यं, विवाहादेः पश्चात्पुरःकरणं प्राभृतं तेन प्राभृतिका ६ सप्तमं प्रादुष्कराख्यं, यत् आत्मार्थं वस्तुनः प्रकटीकरणं ७ अष्टम क्रीताख्यं, क्रीयते—साधुनिमित्तमशनादि गृह्यते ८ नवमं प्रामित्यं, साध्वर्थमुद्धारानीतं ९ दशमं परावर्ताख्यं, परिवर्तितं साध्वर्थं कृतपरावर्तं १० एकादशमभ्याहृतं, साध्वालयमानीय दत्तं ११ द्वादशं उद्भिन्नं, घटादिकं वस्तु उद्भिद्य—उद्घाट्य यद् दीयते १२ त्रयोदशं मालापहृतं, मालात्—मंचादेरपहृतं—साध्वर्थमानीतं, चः समुच्चये १३ चतुर्दशं आच्छेद्यं, आच्छिद्यते—अनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय गृह्यते १४ पंचदशं अनुत्सृष्टं, न निसृष्टं सर्वस्वामिभिः साधुदानायाननुज्ञातं १५ षोडशमध्यवपूरकं, स्वार्थपाकारंभे अधिक्षेपः १६, एवं षोडश पिंडोद्गमे—आहारोत्पत्तौ दोषाः स्युरिति गाथार्थः॥ तथा उद्गमः प्रसूतिरुत्पत्तिः

त्यादि २, तथाऽऽत्मा परश्च पश्यति किं मम इति महात्मा–गरिष्ठ इति चिन्तयति, यदाहुः—"किं सकणिज्ज कज्जं न करेमि अभिग्गहो अ को उचिओ ?। किं मह खलियं जायं ? कह दियहा मज्झ वच्चंति ? ॥१॥ कह नवि पमायपंके खुप्पिस्सं ? किं परो व अप्पो वा। मह पेच्छइ आयारं ? इय कुज्जा धम्मजागरियं ॥२॥" ॥३॥ तत्र पूर्वोक्तं सर्वं स्मृत्वा कायिकीं कथं कुरुते इत्याह—

**आवस्सियाएँ थंडिल्लदेसे गंतूण काइयं काउं। निसीहियं भणंतो पविसइ इरियं पडिक्कमइ ॥४॥**

इह अवश्यं भवा आवश्यकी तया आवश्यक्या–आवसहीइतिशब्दरूपया स्थंडिलदेशे–मात्रकपरिष्ठापनभूभागे गत्वा–गमनं विधाय कायिकीं कृत्वा–लघ्वीं निष्पाद्य निस्सीहि इति भणन्–निस्सीहिशब्दं उच्चरन् वसतिं प्रविशति–प्रवेशं करोति, प्रविष्टः सन् ईर्यापथिकीं प्रतिक्रामति, तत्र ईरणं ईर्या–गमनं तद्युक्तः पन्थाः ईर्यापथः तत्र भवा ईर्यापथिकी–विराधना जंतुबाधा, मार्गे गच्छतां या काचिद्विराधना भवति सा ईर्यापथिकीत्युच्यते, यद्वा ईर्यापथः–साध्वाचारः, आह च—"ईर्यापथो ध्यानमौनादिकं भिक्षुव्रतं" तत्र भवा ईर्यापथिकी–विराधना, नद्युत्तरणशयनभोजनादिभिः प्राणातिपातादिका साध्वाचारातिक्रमरूपा सा ईर्यापथिकी ॥४॥ पुनः ततोऽपि किं करोति तदाह—

**गमणागममालोइय कयकुसुमिणकाउसग्गपच्छित्तो। जिणमुणिवंदण पुव्विं उवउत्तो कुणइ सज्झायं ॥५॥**

तस्या ईर्यापथिक्या अनन्तरं गमनागमनमालोचयति, अत्र त्रिभंगी–गमनं १ आगमनं २ गमनागमनं चेति ३, अत्र प्रस्तावाद् गमनागमनभंगः तमालोचयित्वा 'कृतकुस्वप्नकायोत्सर्गप्रायश्चित्तः' कृतं–विहितं कुस्वप्नविध्वंसनार्थं कायोत्सर्गरूपं [illegible]श्चित्तं–आलोचना(दि)रूपं येनासौ, सर्वमनुष्ठानं ईर्याप्रतिक्रमणपूर्वमेवोद्दिष्टं, आह च–इरियावहियाए अपडिक्कंताए न किंचि [illegible]प्पइ चेइय-

अथ प्रस्तावितान् दशैषणादोषान् नामतः संख्यातश्च दर्शयन्नाह—

संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मिस्से ७।
अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥७९॥

तत्र शंकितं संभाविताधाकर्मादिदोषं भक्तादि १ म्रक्षितं—आरूक्षितं २ निक्षिप्तं—न्यस्तं सचित्तादिषु ३ पिहितं—स्थगितं ४ संहृतं—तस्मादन्यत्र क्षिप्तं ५ दायको—बालादिः ६ उन्मिश्रं—मिश्रीकृतं सचित्तयुक्तं ७ अपरिणतं—अप्रासुकादि कालहीनं ८ पिहितं—स्थगितं ९ छर्दितं—परिशाटिमत् १०, एते एषणादोषाः—पिंडग्रहणदूषणानि दश भवेयुरिति गाथार्थः ॥ यदाहुः—'सोलस उग्गमदोसे'त्यादि ॥१॥ ॥७९॥ अथ द्विचत्वारिंशद्दोषाणां मध्ये षोडश पिंडोद्गमदोषाः, तेष्वाद्यमाधाकर्म, तद्विचारं गाथासप्तकेनाह—

साहुनिमित्तं भत्ताइ जं गिही कुणइ तं अहाकम्मं। सचित्तस्साचित्तीकरणमचित्तस्स वा पयडं ॥८०॥
उद्दिसियं तं तु कुराइयस्स दहिउल्लवणाइ उद्दिसिय। अहकम्मजुअं पूई मीसं कयमप्पजइजोगं ॥८१॥
मुणिजोग्गं ठवइ पिहु जं सा ठवणा इमा उ (सा ठवणा पयरणे उ
पाहुडिया) साहुवओगाय थिरं दुयं व जं पगडणं कुणइ ॥८२॥
पाओरण दीवाई पयडणं देइ वत्थुणो मज्झे। कीयं तु मुल्लगहियं पामिच्चयमुद्धियं जं तु ॥८३॥
परियट्टियं इमं पुण जं दिज्जइ गहिय वत्थुणा वत्थुं। तं अभिहडं जमाणियमन्नठाणाउ मुणिकज्जे ॥८४॥
उब्भिन्नं कूडाइसु घयाइ दाणाय मट्टिया भिहडं। मालोहडं जहत्थं पराउ हड गहियमच्छिज्जं ॥८५॥

वंदणसज्झायआवस्सयाइ काउं" इति वचनात्, क्षमाश्रमणपूर्वं 'कुसुमिणदुसुमिणओहडावणियं राईपायच्छित्तविसोहणत्थं काउस्सग्गं करेमि' तत्र चतुर्विंशतिस्तवचतुष्कचिन्तनं, ततोऽपि किं कुरुते ?—'जिनमुनिवन्दनपूर्वं' जिना—भगवन्तो मुनयः—साधवस्तयोर्वन्दनं—नमस्कारस्तत्पूर्वं—तत्पुरःसरं उद्युक्तः—उद्यमपरः प्रमादरहितः करोति स्वाध्यायं, अत्र सर्वसाधुरेव कर्ता बोद्धव्यः, यदाहुः—"जामिणि पच्छिमजामे सव्वे जग्गंति बालवुड्ढाई । परमिट्ठिपरममंतं भणन्ति सत्तट्ठवाराउ ॥१॥ इरियं पडिकमंते कुसुमिणदुसुमिणनिवारणोसग्गं । सम्मं कुणंति निज्जूढपमायनिद्दा महामुणिणो ॥२॥ पाणिवहप्पमुहाणं कुसुमिणभावे भवन्ति उज्जोया । चत्तारि चिंतणिज्जा सनमुकारा चउत्थस्स ॥३॥ जिणनमणमुणिनमंसण पुव्वं तत्तो कुणेइ सज्झायं । चिंतंति पुव्वगहियं तवनियमाभिग्गहप्पमुहं ॥४॥" ॥५॥ ततः स्वाध्यायकरणे फलं किमित्याशंक्याह—

**कम्ममसंखिज्जभवं खवेइ अणुसमयमेव उवउत्तो । अन्नयरंमिवि जोगे सज्झायंमि य विसेसेणं ॥६॥**

प्राणी असंख्यातभवं कर्म—असंख्यातभवनिबद्धं कर्म अनुसमयमेव—प्रतिसमयमेव उद्युक्तो—धर्मक्रियास्वुद्यमवान् क्षपयति—निराकरोति, क्व ?—अन्यस्मिन्नपि धर्मयोगे—इतरस्मिन् पुण्ययोगे, स्वाध्याये च उद्युक्तो विशेषेण कर्म क्षपयत्येव, यदाहुः—जामिणि विरामसमए सरए सलिलव्व निम्मलं नाणं । इय तत्थ धम्मकम्मे आयमुवायं विचिंतिज्जा ॥१॥" ॥६॥ ततोऽपि साधुः कां क्रियां कुरुते तदाह—

**धम्मीणं जागरिया पुणो अहम्मीण सुत्तया सेया । तो तह भणइ महप्पा जह पावजिया न जग्गंति ॥७॥**

तत्र निशाविरामे धर्मिणां—धर्मात्मनां जागरिका—निद्रात्यागरूपा श्रेयसी, यतो धर्मिणां जाग्रतां गरीयान् लाभः, आह च—

४। हदनो, यथा एकः कुलपुत्रको भार्यादेशात् अर्भकानां क्रीडापनमूत्रोत्सर्गादिविधानतत्पोतकक्षालनकरणेन दुर्गंधवस्त्रो लोकेन हदन इत्युच्यते ५। अथ गृध्रावरिपी, यथा कश्चिद् भोजनोपविष्टो व्यंजनतक्रादियाचने निजमहिलया गृहकर्मव्यापृतया साधिक्षेपं गृहाणेत्युक्तो गृध्र इव रिंपन् २ तदासन्नं यातीति लोकेन गृध्रावरिपीत्युच्यते ६, तदेते षड् गृहिणीवशा इति(तेनोक्तं—नाहं तथा, ततः) क्षुल्लक ऊचे-यद्येवं तर्हि घृतगुडान्विताः प्रभूताः सेवतिका देहि मे निजगृहात्, अथ उत्थाय कथितपत्नीवृत्तान्तं क्षुल्लकं द्वारे अवस्थाप्य गृहिणीं चाकार्य व्यपदेशेन मालामारोप्य उत्सारितनिःश्रेणिकः (स ता ददौ) क्षुल्लकः स्वनासांगुलीघर्षदर्शनेन तस्यापि ज्ञापितना-साघर्षमाकार्य सेवतिका ललौ इत्येवं मानपिडः ८। अथ मायापिंडः, यत्र मायया—वंचनेन परप्रतारणबुद्ध्येतियावत् विविधरूपं नानारूपं नानाकारं काणकुब्जाद्यनेकस्वभावं वेषं—अंगादिसंस्थानमाहारकारणे—अशनादिलाभाय क्रियते स मायापिंडः, यदाहुः—"मायाइ विविहरूवं (माहू) आहारकारणे कुणइ" इति, मायायां आषाढभूतेर्निदर्शनं, यथा राजगृहे सिंहरथो राजा, अन्यदा तत्रागता धर्मरुचय आचार्याः, विविधज्ञानी आषाढभूतिर्विहरन् नटगृहं गतः, तत्रैकमोदकलाभादेष सूरीणामिति विचिन्त्य काणीभूय द्वितीय जग्राह, असावुपाध्यायस्येति कुब्जरूपेण तृतीयमादात्, साघाटिकसाधोरसाविति कुष्ठिकरूपेण चतुर्थमग्रहीत्, तच्च गवाक्षस्थनटेन दृष्टं, चिन्तितं—अहो भव्योऽसौ नटो भवतीति संग्रहार्थं तमाकार्य यथेष्टं मोदकांश्च दत्त्वा नित्यमत्रागन्तव्यमिति भणितवान्, अथ रूपपरावर्तादिलब्धिमानसौ तथोपचरणीयो यथा मत्पुत्रीरक्तः सदा अस्मद्गृहमायातीति नटेन शिक्षितं तथा पत्न्याः, स नित्यं गृहमागच्छन् तथा तत्पुत्र्या लोभितो यथा आमघट इवांभोभिर्भिन्नो यथा गुरूनवगणय्य मुक्तव्रतस्तां परिणीतवान्, तथा अस्य पश्यतो मद्यादिकं नासेव्यं (इति न्ययंसीत्) अन्यदा विविधनटावृतो नृपगृहे गत्वा तत्र दूतव्याक्षेपाद्वलितो, निर्व्यंजनमिति

"जागरह नरा निच्चं जागरमाणस्स वड्ढए बुद्धी। जो सुवइ सो न धन्नो जो जग्गइ सो सया धन्नो ॥१॥" किंच–"सीयंति सुवंताणं अत्था पुरिसाण लोगऽसारित्था। तम्हा जागरमाणा विहुणह पोराणयं कम्मं ॥२॥ सुवइ सुवंतस्स सुअं संकियखलियं भवे पमत्तस्स। जागरमाणस्स सुयं चिरपरिचियमप्पमत्तस्स ॥३॥ सुयई अयगरभूओ सुअं च से नासिहिइ अमिअभूतं। होई गोणब्भूओ नट्ठंमि सुए अमिअभूए ॥४॥ जो केवलीव सम्मं सुअनाणवलेण तिहुअणं मुणइ। सो निद्दाइ निवडिओ भमेइ भीमं भवमणंतं ॥५॥" तथा अधर्मिणां–पापात्मनां पुनः सुप्तता श्रेयसी–नियतैव श्रेष्ठा, ततः–तदनन्तरं तथा भणति–तथा जल्पति पूर्वाधीतं वा तथा स्मरति महात्मा–गरिष्ठात्मा यथा पापजीवा–दुष्टजन्तवो गृहगोधाकाकादयस्तैलकारकुंभकारादयश्च न जाग्रति–न निद्रां त्यजन्ति, यदाहुः "इरियावहियाईयं सव्वं सणियं भणन्ति जयणाए। घरकोइलकायाई जह पाविट्ठा न जग्गंति ॥१॥ आउज्जोवणवणिए अगणि कुडुंबी कुकम्म कम्मरए। तेणे मालागारी उब्भामगइत्थिए जंते ॥२॥" तथा चात्र निदर्शनं—

क्वापि पुरे केऽप्याचार्याः वर्षासूपाश्रयस्थाः पश्चिमरजन्यां शिष्यान् पूर्वगतं जीवाध्ययनमध्यापयन्तो गुणनिकां कारयन्तः सन्ति, तत्रौषधयोगाद् जीवोत्पत्त्यधिकारे मन्दं मन्दं सार्यमाणे रभसा शिष्येण गाढं पृष्टं–भगवन्! अत्रागमे अमुकवृक्षपर्णयोगात् जले तत्क्षणं मत्स्योत्पत्तिर्भणिता, तरोर्लोकभाषायां किं नाम ?, गुरुभिरनाभोगाद् गाढशब्देनाभापि–अमुकं नामेति, तद्वचः प्रातिवेश्मिकेन मात्स्यिकेनाश्रावि, तेन तथैव कृतं, बहुमत्स्योत्पत्तिर्जाता, प्रतिदिनं २ बहुमत्स्योत्पत्तितः स धनाढ्यो बभूव, असंख्यमत्स्यविक्रयाद् नवीनं सदनं निर्माय विलासान् विधत्ते, व्यतीतेषु वर्षेषु सूरयस्ते तत्राययुः, तेन दृष्टाः, स्वर्णपोट्टलिका रत्नैर्भृता गुरुपादाग्रतोऽढौकि, भणितं च–भगवन्! युष्मद्वचःप्रसादादहं धनी जातः, एतद् गृह्णीध्वं प्रसादात्, यथा मम समाधिर्भवति,

मयोग्यं यत्र द्वे वस्तुनी एकीकृत्य साधवे दीयते तदुन्मिश्रं, अत्रैकीकरणं मीलनमात्रमेवावसेयं, अस्मिन्नपि दोषे चतुर्भंगी, यथा सचित्तेन सचित्तं मिश्रं १ एवमचित्तेन सचित्तं २ सचित्तेनाचित्तं ३ अचित्तेनाचित्तं ४, एष्वादिभंगत्रयं न कल्पते, चतुर्थः शुद्ध एव, अथ अपरिणतं–अपरिणताभिधानं यत्र दातव्यं वस्त्वेव द्रव्यमेव अप्रासुकं, अथवा एतदशनादि ग्राहकस्य साधोर्मनसि निर्दोषं परिणतं द्वितीयस्य सदोषं परिणतं, अथ लिप्तं मधुना, आदिना दधिक्षीरतक्रं, अनेन च विलिप्तेन लेपयुक्तेन यद्ददाति तल्लिप्तं ॥९६॥ अथ छर्दिताख्यमाविष्करोति–छर्दितं–छर्दिताभिधानं दूषणं स्यात्, तत् किं यदशनादि–भक्तपानप्रभृति परिशाटी–भूमौ परिपतदवयवं सद् आदीयते तत्, एतस्मिन् छर्दिते दोषे मिलिते सति पूर्वोक्ता द्विचत्वारिंशद्दोषा भवन्ति, अत्र वारकमंत्रिकथानिदर्शनं पूर्वं व्याख्यातमेवास्ति ॥ ते च यथासंख्यं षोडश२दश गृहस्थयतितदुभयप्रभवाः, कोऽर्थः ?–षोडश उद्गमदोषाः गृहस्थप्रभवाः, गृहिणा प्रायेण तेषां क्रियमाणत्वात्, तथा साधुप्रभवाः षोडश, तेषां साधुनैव विधीयमानत्वात्, तथा गृहिसाधुजन्या दशैषणादोषाः, शंकितदोषस्य साधुभवत्वात् अपरिणतदोषस्य च साधुजन्यत्वात्, शेषाणां च गृहिप्रभवत्वात्, तथा पंच ग्रासैषणादोषाः तान् अग्रे वक्ष्यति, यदाहुः–इह "सोलस सोलस दस उ उग्गमउपायणेसणादोसा। गिहिसाहुउभयपभवा पंच उ घासेसणा होइ ॥१॥ ९७॥ उक्ताः पिंडदोषाः, अथ पिंडग्रहणलाभमाह—

**पिंडो देहो भन्नइ तस्स उवट्ठंभकारणं दव्वं। एगमणेगं पिंड असणाइ पाउंछणाईयं ॥९८॥**

पिंडः–पिंडशब्देन देहः–कायो भण्यते–कथ्यते तस्य–देहस्योपष्टंभकारणे–आधारनिमित्ते पिंडं द्रव्यं स्यात्, तत् पिंडद्रव्यमेकं मनेकं च, यथा एकमशनादि अनेकं पादप्रोंछनादि ॥९८॥ तदेकमनेकं विवृणोति—

ऊचुः सूरयो–वयं निर्ममा निर्ग्रन्थाः त्यक्तसङ्गाः किं प्रयोजनं धनेनास्माकं ?, अन्यच्च–अस्माकं प्रसादात्ते धनाप्तिः कथं ?, मात्स्यिकेन पूर्वो रात्रिवृत्तान्तः उक्तः, गुरुभिः पापभीरुभिश्चेतसि चिन्तितं–आः स्वामिन् भगवन् अर्हन् ! विस्मृतिवशात् प्रमादाच्च स्तोकमात्रवचनासंवरेण मम कियत् पापं लग्नं ?, अन्यच्च–कर्हिचित् मत्स्यबन्धकेनानेनान्यस्य कस्यायमौषधयोग उपदिष्टो भविष्यति तदाऽतितीव्रतरा वृद्धिर्भविष्यति, अत एवोक्तं–युक्तमिदं, वरं हालाहलं पीयं, वरं अग्गीअ सेवणं । वरं संपेहसंवासो, मा पमाएण संगओ ॥१॥ किंच–जयणाय धम्मजणणी जयणा धम्मस्स पालणी चेव । तव्वुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥२॥ अतः प्राणिना यतनैव कार्या, प्रमादः परिहर्तव्यः, उक्तं च शय्यंभवाचार्यैः–"कहं चरे ? कहं चिट्ठे ?, कहमासे ? कहं सए ?। कहं भुंजंतो ? भासंतो ?, पावं कम्मं न बंधइ ॥१॥ जयं चरे जयं चिट्ठे, जयमासे जयं सए। जयं भुंजंतो भासंतो, पावं कम्मं न बंधइ ॥२॥" तावत् मम जीवोत्पत्तिं भेदेन शिक्षाणां गाढस्वरेण कथयतः इयती पापवृद्धिरभूत्, परमसावुपायेन पापान्निवार्यते तदा श्रेयः, अन्यथा धर्मोपदेशदानेनासौ धर्मार्थी सन् मात्स्यिकः पापादस्मात् सर्वथा न निवर्तयिष्यते, अतोऽस्मिन् एकस्मिन् समाप्तिं नीते स्तोकं पापं स्यात्, अनेकप्राणिसंहारपापं निवर्तते, अतः स्तोकव्ययेन बहुलाभः, उक्तमस्ति–"तम्हा सव्वाणुन्ना सव्वनिसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा लाहाकंखिव्व वाणियओ ॥१॥" इति विचिन्त्योत्सर्गापवादविधिज्ञैस्तैरुक्तः सः–इदमौषधं त्वया कस्याप्युक्तं न वा ?, तेनोक्तं–नो कस्यापि परमनिधानवत्, सूरिर्जगौ–तर्हि भव्यं कृतं, परमनेनौषधेन तव बहुपापं लाभः स्तोकः, अतोऽन्यदौषधं ते कथयामः येन तव अक्षयसुवर्णदायकः सुवर्णपुरुषः सिध्यति, स प्राह–स्वामिन् ! तदौषधमपि वद, सूरिर्जगौ–द्वारि अर्गलां दत्त्वा अपवरकान्तः–एतदौषधं जलकुंडिकायां क्षिप्तं सुवर्णपुरुषं प्रकटयिष्यति, तेन तत् तथा विहितं, व्याघ्रो निःसृतः, तेन स घातितः,

॥२॥" किं च–अन्नजलं उण्हं वा कसायदव्वेहिं मीसियं वावि। कप्पइ जईण नन्नं सुविहियकप्पट्ठियाणं २ च ॥ १ ॥ सीओदगं न सेविज्जा, सिलावुट्ठं हिमाणि य। उसिणोदग तत्तफासुअं, पडिगाहिज्ज संजए ॥ २ ॥ उसिणोदगं तिदंडुकलियं फासुअजलं तु जइकप्पं। नवरि गिलाणाइकए पहरतिगोवरि धरेयव्वं ॥ ३ ॥ जायइ सचित्तया से गिम्हंमि य पहरपंचगस्सुवरिं। चउपहरुवरि सिसिरे वासासु जलं तिपहरुवरि ॥४॥ ॥१०२॥ अशनादि गृहीत्वा पश्चात् कं विधि तनुते इत्याशंक्याह—

**इय विहरिय वसहि गओ इरियं आलोअणा य गुरुपुरओ। काउं पेहिय भूमिं मुत्तुं भत्ताइ नमइ जिणे ॥१०३॥**

इति–आगमनिरूपितयुक्त्या विहृत्य–निर्मलपिंडं गृहीत्वा वसतिं गतः–उपाश्रयद्वारं प्राप्तः पिंडादि प्रमार्ज्य निषेधिकापुरस्सरं वसतिमध्ये प्रवेशं विधाय ईर्यां प्रतिक्रामति, तदनु गुरुपुरत आलोचनां कृत्वा भूमि–मंडलीसंस्थानं प्रतिलिख्य तत्र पात्रकाणि मुक्त्वा भक्ताद्यर्थं जिनान् नमति, शक्रस्तवं पठतीत्यर्थः, यदाहुः—"इय समयविहिसुद्धं पिंडं गिण्हित्तु वसइदारंमि। पज्जत्ते परिभाविय पम्मज्ज निसीहिया कुणइ ॥१॥ सज्जामज्झे पविसिय पडिलेहिय मंडलीय जं ठाणं। वच्चइ य गुरुसयासे इरियावहियं पडिक्कमइ ॥२॥ काउस्सग्गे चिंतइ कमेण अइयारनिवहमावन्नं। जं भत्तपाणविसयं गमणागमणस्स विसयं च ॥ ३ ॥ पारियकाउस्सग्गो चउवीसथयस्स चितणं काउं। गमणागममालोइय अव्वक्खित्तस्स गुरु पुरओ ॥४॥ उज्जुपन्नो अणुव्विग्गो, अव्वक्खित्तेण चेयसा। आलोए गुरुसयासे, जं जहा गहियं भवे ॥५॥ वक्खित्त १ पराहुत्ते २ पमत्ते ३ मा कयाइ आलोए। आहारं च करंतं ४ नीहारं वा ५ जइ करेइ ॥६॥ अव्वक्खित्ताउत्तो उ, संतबुद्धिनाऊणं(त्ति जाणिया। अणुन्नवित्तु मेहावी, आलोइज्ज जयं जई ॥७॥ जं किंचि दुरालोइयमणेसणिज्जं भवेज्ज भत्ताई। तप्पडिकमणनिमित्तं उस्सग्गं कुणइ इय विहिणा ॥८॥ इच्छामि पडिकमिउं गोअरचरि-

स तु व्याघ्रः संमूर्च्छजोऽन्तमुहूर्तजीवी स्वयमपि मृतः, एवमाचार्यैः पापशुद्धिर्निवारयित्वा गुरुभिः शिष्येण सहालोचना गृहीता, सुगतिं जग्मतुः, अतो भव्यैः प्राणिभिरितिविचार्य रात्रिन्दिवं भाषासमितिः पालनीया, विशेषतो निशायां गाढं न वक्तव्यं इति भाषाऽसमितौ साधुकथा ॥७॥ पुनरपि मुनिर्निशान्ते किं करोति तदाह—

कालियसुअभणणत्थं गिण्हइ पाभाइयं खणे कालं । पडिकमइ तहा जह दस पडिलेहाणंतरं सूरो ॥८॥

'कालिकश्रुतप्रभणनार्थं' कालेन—कालग्रहणेन गृहीतं श्रुतं कालिकश्रुतं, तत्र श्रुतं द्वेधा—कालिकमुत्कालिकं च, तद्भणनार्थं क्षणे—प्रस्तावे पाभाइयकालं गृह्णाति, उक्तं च—"कालग्गहणावसरे पत्ते पाभाइयं तओ कालं । कालियसुअपढणत्थं दुन्नि जहन्नेण गिण्हंति ॥१॥ तदनु प्रतिक्रामति—प्रतिक्रमणं तथा करोति यथा दश प्रतिलेखनाः—मुखवस्त्रिकारजोहरणादिकाः तत्कृतानन्तरं सूर्य उद्गच्छति—उदयं प्राप्नोति, प्रतिक्रमणं निर्युक्तौ पंचधोक्तं—पडिकमणं देवसियं राइयमित्तरियमावकहियं च । पक्खिय चाउम्मासिय संवच्छरियत्ति सत्तेए ॥१॥ तत् प्रतिक्रमणं पंचाचारविशुद्धिनिमित्तं क्रियते, तदाहुः—"पंचविहायारविसुद्धिहेउमिह साहु सावगो वावि । पडिकमणं सह गुरुणा गुरुविरहे कुणइ एक्कोवि ॥१॥" ॥८॥ अत आचार्यादीनाश्रित्य विशेषविधेर्निर्णयमाह—

आयरियगिलाणाई जे नवि जग्गंति पच्छिमे जामे । आवस्सयस्स समए कज्जं इरियाइयं तेहिं ॥९॥

आचार्यग्लानादयो ये पश्चिमयामे—क्षपान्तिमे यामे न जाग्रति—न निद्रात्यागं कुर्वन्ति, आगमे तेषां तत्राजागरणभणनात्, यदाहुः—"सव्वेऽवि पढमजामे दोन्नि य वसहाण आइमा जामा । तइओ होइ गुरूणं चउत्थ सव्वे गुरू सुअइ ॥१॥" आवश्यकस्य समये—प्रतिक्रमणस्य प्रस्तावे तैः—आचार्यादिभिरीर्यादिकं कार्यं—ईर्यापथिक्यादि समग्रं विधेयं । तत्रावश्यकं किं नाम ?, तथा चोक्तं

सरूविणो। अज्जाणं पन्नवीसं तु, अओ उड्ढं उवग्गहो ॥१॥" ॥१२१॥ अथ आर्यकाणामुपकरणं दर्शयति—

**उवगरणाइं चउदस अचोलपट्टाइं कमढगजुयाइं। अहियाइं समणीणवि भणियाणिवि हुंति ताणेवं ॥१२२॥**

श्रमणीनां उपकरणानि चतुर्दश पूर्वोक्तान्येव भवन्ति, कथंभूतानि?—'अचोलपट्टानि' चोलपट्टरहितानि, पुनः कथंभूतानि?—कमढकयुतानि सहितानि, तान्येव पूर्वभणितानि वक्ष्यमाणप्रकारेणाधिकानि भवन्ति, एवं पंचविंशतिः ॥१२२॥ अथ पंचविंशत्युपकरणसंख्यां व्यक्तीकुर्वन् गाथाद्वयेनाह—

**उग्गहणंतग पट्टो अद्धोरुअ चलणिआ य बोद्धव्वा। अब्भिंतरबाहि नियंसिणी य तह कंचुए चेव ॥१२३॥**

**ओगच्छिय वेगच्छिय संघाडी चेव खंधकरणी य। ओहोवहिंमि एए अज्जाणं पन्नवीसं तु ॥१२४॥**

तत्र अवग्रहानंतकः १ पट्टः-२ अर्द्धोरुकः ३ चलनिका ४ अब्भितरनिवसनी ५ बहिर्निवसनी ६ कंचुकः ७ उत्कक्षिका ८ वैकक्षिका ९ संघाटी १० स्कंधकरणी ११ ओघोपधौ—उत्सर्गोपधौ आर्यकाणां—साध्वीनां एते एव पंचविंशतिर्भेदाः, तथा अमीषां अर्थानां भेदाः निरूप्यन्ते, आह—अवग्रहानन्तकः कीदृशो भवति?, नावनिभः—नावासदृशः घनो—निविडः आर्त्तवबीजपातरक्षार्थं मसृणं च कर्कशस्पर्शत्यागार्थं कस्याश्चित् सूक्ष्मं कस्याश्चित् स्थूलं, शरीरप्रमाणेन भवति, शरीरमपेक्ष्य भवतीत्यर्थः, यदाहुः—अह उग्गहणंतगं नावसंठियं गुज्झदेसरक्खट्ठा। तं तु पमाणेणिक्कं घणमसिणं देहमासज्ज ॥१॥ अथ पट्टः—पट्टश्चतुरंगुलपृथुः कटीमानदीर्घः ह्रस्वकट्या ह्रस्वः दीर्घकट्या दीर्घः मल्लचरणीवद्भवति—मल्लकच्छावत् स्यात्, अवग्रहानन्तकमाच्छादयति, यदाहुः—"पट्टोऽवि होइ एगो देहपमाणेण सो भईयव्वो। छायंतुग्गहणंतं कडिबद्धो मल्लकच्छव्व ॥१॥१२३॥ अर्धोरुगः—आद्यं ऊरुकार्धं भजति अर्द्धो-

अनुयोगद्वारे-"समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा । अन्तो अहोनिसिस्स य तद्दा आवस्सयं नाम ॥१॥" ॥९॥

तदेव पूर्वोक्तमीर्यादिकं किमित्याशंक्याह—

**इरिया कुसुमिणुसग्गो सक्कत्थय साहुनमण सज्झायं । चउरोऽवि खमासमणा सव्वस्सवि दंडओ चेव ॥१०॥**

तत्र प्रतिक्रमणविधौ आदावीर्यापथिकी, तदनु कुस्वप्नकायोत्सर्गः, स चायं-क्षमाश्रमणपूर्वं 'कुसुमिणदुसमिणराईपायच्छित्त-विसोहणत्थं काउस्सग्गं करेमि' इत्यादि भणित्वा चतुर्विंशतिस्तवचतुष्कचिन्तनं, ततः पारिते चोच्चैःस्वरेण लोगस्स० आप्रान्ताद्भणनं, तदनु शक्रस्तवः नमोत्थुणमित्यादिकः, ततोऽपि साधुनमनं-प्रत्येक२साधुनमस्करणं, पश्चाल्लघुक्षमाश्रमणयुग्मपूर्वं स्वाध्यायकरणं, तदनु जाते प्रतिक्रमणसमये प्रतिक्रमणारंभः, स चायं समयः-'जो मासो वट्टंतो तस्स य मास्सस्स ततियमासंमि । जंनामं नक्खत्तं सेसेसु ठिए पडिक्कमणं ॥१॥ तत्र प्रतिक्रमणारभे चत्वारि क्षमाश्रमणानि, तानि चामूनि-श्रीभगवन् १ आचार्य २ उपाध्याय ३-सर्वसाधुरूपाणि ४, इह भगवन्शब्देनार्हन् समग्रैश्वर्यादियुक्तः, आचार्यादयः प्रतीता एव, पश्चात् क्षमाश्रमणपूर्वं 'राई पडिकमणइ ठाउं' इत्यादि भणित्वा भून्यस्तमस्तकः 'सव्वस्सवि राईय' इत्यादिदंडकं सकलरात्रिकातिचारबीजभूतं भणति ॥१०॥

तस्मिन् दंडके भणिते पश्चात् किं पठति तदाह—

**सक्कत्थय सामाइय घरणाइतिगस्स तिन्नि उस्सग्गा । चउवीसइत्थय दोसुं तइए अइआर चिंतणयं ॥११॥**
**थुइ पोत्ती आलोअण संथारावट्टणाइयं विहिणा । सुत्तं अब्भुट्ठाणं वंदण खामणय वंदणयं ॥१२॥**
**सामाई छम्मास तव उस्सग्गुज्जोय पुत्ति वंदणयं । उस्सग्गे चिंतियं तवोविहाणमिह पच्चक्खाणे ॥१३॥**

माणपव्वा निद्धा वन्नेण एगवन्ना य । घणमासिणवट्टपोरा लट्ठि पसत्था जइजणस्स ॥१॥" ॥१२९॥ अथ एवंभूताया यष्टेः साधोः प्रयोजनमाह—दुष्टपशवो—ग्राम्याः दुष्टजंतवः श्वानाः—ग्रामव्याघ्राः श्वापदाः—आरण्यका दुष्टतिर्यंचः विज्ञलः—कर्दमप्रदेशः तद्विषमेषु-निम्नोन्नतेषु च उदकमार्गेष्वपि—जलमार्गेष्वपि यष्टिः शरीररक्षार्थं तपःसंयमसाधिनी भणिता ॥१३०॥ अथोपकरणनिर्णयमाह—

**उवगरणं जं जुज्जइ उवयारे सेसयं तु अहिगरणं । इय उवहिं पेहित्ता पुणरवि संगहइ सुत्तत्थं ॥१३१॥**

उपकरणं तत् यदुपकारे—शरीररक्षादौ युज्यते, तु पुनः शेषं—उपकरणादन्यदधिकरणं इति, पूर्वोक्तं—पूर्वोक्तस्वरूपमुपधिं प्रतिलेख्य पुनरपि सूत्रार्थं गृह्णाति ॥१३१॥ अथ सूत्रार्थग्रहणे साधूनां को लाभस्तदाह—

**जह जह सुअमवगाहइ अइसयरसपसरसंजुअमपुव्वं । तह तह पल्हाइ मुणी नवनवसंवेगसद्धाए ॥१३२॥**

यथा यथा साधुः श्रुतं—आगममवगृह्णाति, कथंभूतं ?—अतिशयरसप्रसरसंयुतं, पुनः कथंभूतं ?—अपूर्वं—नवीनं, तथा तथा संवेगश्रद्धया—वासनया प्रह्लाति—हर्षभाक् भवति ॥१३२॥ अथ साधोर्दिनचतुर्थभागकृत्यमाह—

**दिणसेसे कयथंडिलपेहो पडिकमइ गोयरे चरियं । जं किंचि अणाउत्तं तं सुमरिय कुणइ पच्छित्तं ॥१३३॥**

तथा दिनशेषे—दिनावसाने कृतस्थंडिलो—विहितबाह्यदूरमध्यविधिना कालस्थंडिलविधिकः, यदाहुः—"चउभागवसेसाए चरिमाए पोरिसीए कालस्स । पडिकमिऊण कुणंतो थंडिलपडिलेहणं तत्तो ॥१॥ अहियासियऽणहियासिय बहिरंतो दूरमज्झआसन्ने । मुत्तुच्चारे बारस बारस कालंमि भूमितियं ॥२॥ पढमप्पहराणीयं असणाइ जईण कप्पए भोत्तुं । जाव तिजामे उड्ढं तमकप्पं कालअइकन्तं ॥३॥ असणाईयं कप्पइ कोसदुगब्भंतराउ आणेउं । परओ आणिज्जंतं मग्गाईयंति तमकप्पं ॥४॥ तथा विहितस्थंडिला-

इगपंचाइदिणूणं पणमासं जा चइत्तु तेरदिणे। चउतीसाइ दिणूणं चिन्ते नवकारसहियं जा ॥१४॥

तदनु पुनः शक्रस्तवं पठति, तत्पठिते उत्थाय 'करेमि भंते ! सामाइय'मित्यादिसूत्रपाठपूर्वं चारित्रदर्शनज्ञानाचारातिचार-विशुद्ध्यर्थं कायोत्सर्गत्रिकं करोति. तेषु त्रिषु किं चिन्तनीयं ?, उत्तरार्द्धं तदाह–'चउवीसत्थय'मिति द्वयोश्चतुर्विंशतिस्तवयुग्मं, यथा रात्रिप्रतिक्रमणे प्रथमे कायोत्सर्गे एकं चतुर्विंशतिस्तवं चिन्तयति, द्वितीयेऽप्येकं, 'सासमयं गोसद्ध' इति वचनात्, तृतीये तु निशातिचारांश्चिन्तयति, सा चेयं गाथा–गोसमुहणंगाई आलोए देवसीअअइआरे। सव्वे समाणयित्ता हियए दोसे ठविज्जाहि ॥१॥ अर्थश्चायं–गोसं–प्रभातं तस्मादारभ्य मुखवस्त्रिकादौ आलोकयेत् दैवसिकान् अतिचारान् प्राक् यथोक्तान्, ततः सर्वान् समानीय–एकत्र कृत्वा हृदये दोषान्–आलोचनीयान् अतिचारान् स्थापयेदित्यर्थः ।.११॥ तदनु कं विधि कुरुते तदाह—थुईत्ति ततः कायोत्सर्गं पारयित्वा 'सिद्धाणं बुद्धाण'मिति पठति, ततः संडासकप्रमार्जनपूर्वं उपविशति, ततः पोतिकां प्रतिलिख्य वन्दनकं दत्ते, इह पोतिकाप्रतिलेखनपूर्वकस्य वन्दनस्य (स्थाने) पोतिकैव भणिता, पश्चादालोचनं 'इच्छाकारेण संदिसह भगवन् ! राइयं आलोएमि' इति सकलं सूत्रं पठति, तदालोचनानन्तरं संथारावट्टणीति गाथाभणनं, सा चेयं–संथारावट्टणगी परिअट्टणकी पसारणकी रहठाण वार जो न सरिओ, इतः सव्वस्सवि राई० इच्छाकारेण संदिसह' तत्र गुरोर्वाक्यं–पडिकमह, अपरो भणति–इच्छं, पुनः तस्स मिच्छामि दुक्कडं इति भणित्वा पुनरुपविशति, उपविष्टः सन् विधिना–विधिपूर्वेण सूत्रं–प्रतिक्रमणसूत्रं भणति, स विधिः कः ?, आह–काऊण वामजाणुं हिट्ठा उड्ढं च दाहिणं जाणुं। सुत्तं भणंति सम्मं करजुयकयपुत्तिरयहरणा ॥१॥ ततोऽपि अभ्युत्थानं–ऊर्ध्वीभवनं 'तस्स धम्मस्से'त्यादि, वंदामि जिणे चउव्वीसं इति पर्यन्तभणनं, ततः भणिते सूत्रे वन्दनं–द्वादशावर्तव-

अतिचाराः के इत्याह—

**सयणासणन्न पाणे चेइय जइ सिज्ज काय उच्चारे । समिई भावण गुत्ती वितहायरणंमि अइयारे ॥१३५॥**

तत्र शयनं—संस्तारकः १ आसनं—पीठादि २ अन्नपाने प्रतीते ३—४ एषामविधिना ग्रहणे परिभोगे च, चैत्यस्याविधिना वंदने 'जइ'त्ति यतिविषये यथार्हविनयाद्यकरणे ५ शय्याया—वसतेः अविधिना प्रमार्जनादौ स्त्र्यादिससक्तायां वा तस्यां वसने ६ कायिकोच्चारावस्थंडिले अप्रतिलेखितस्थंडिले वा कुर्वतः ७ समितयः—ईर्यादयः पंच ८ भावनाः—अनित्याद्या द्वादश ९ गुप्तयः तिस्रः १० आसां वितथाचरणे अनासेवने वा अतिचारः, अस्मिन् दैवसिककायोत्सर्गे एतानालोचयति ॥ १३५ ॥ तथा पूर्वोक्तानतिचारानालोच्य पारिते च कायोत्सर्गे किं करोति तदाह—

**उज्जोअ पुत्ति वंदणमालोअण ठाण कमण पयसुत्तं । अब्भुट्ठिय वंदणखामण वंदण आलियावणियं ॥१३६॥**

तत्र कायोत्सर्गे पूर्णे उच्चैःस्वरेणाष्टाविंशत्युच्छ्वासपर्यन्तं लोगस्सुज्जोअगरे इति निगदति, लोकोद्योतरानित्यादि भणति, तद्भणिते च मुखवस्त्रिकां प्रतिलिख्य वन्दनकं ददाति, तद्दत्वाऽऽलोचनं 'इच्छाकारेण संदिसह भगवन्! दैवसिकमालोचयामि' तस्मिन्नालोचिते च 'ठाणे कमणे' इत्यादि भणति, 'सव्वस्सवि देवसिय' इति पर्यन्तं पठति, पश्चाद्गुरोर्वाक्यं पडिकमह इति निशम्य उपविशति, तदनु सूत्रं—प्रतिक्रमणसूत्रं 'करेमि भंते! सामाइयं' इत्यादि कृत्वा भणति, तथा च परिपूर्णे सूत्रे अभ्युत्थितस्सन् 'अब्भुट्ठिओ मि आराहणाए इत्यतः अभ्युत्थितोऽस्म्याराधनार्थं वंदामि जिनान् चतुर्विंशति'मिति पर्यन्तं पठित्वा पश्चाद्वन्दनकं क्षामणं च 'जं किंचि अपत्तियं' इत्यादि यत् किंचित् अप्रीतिकमिति कथयति, पुनर्वन्दनकं ददाति, इह सर्वत्र द्वादशावर्तवंदनकं लघु-

न्दनकं पश्चात् क्षामणं–'अब्भुट्ठिओऽह' मित्यादि भणनं, पुनरपि वन्दनं, बृहद्वंदनकमित्यर्थः ॥ १२ ॥ ततः पुनः को विधिर्विधेय इत्याशंक्याह—वंदनकानन्तरं सामायिकं–करेमि भंते ! सामाइयं तत्पूर्वकं षण्मासतपस उत्सर्गः, तस्मिन् कायोत्सर्गे गुरुणा नमस्कारपूर्वकं पारिते पश्चादन्योऽपि साधुवर्गः कायोत्सर्गं पारयेदिति, यदुक्तं च–भणियंमि नमुक्कारे गुरुणा पारिज्ज तयणु उस्सग्गं। एवं कियकम्माइसु अन्नह आणाइया दोसा ॥१॥" कायोत्सर्गे पारिते उज्जोअकथनं–लोगस्स उज्जोअगरे साद्यन्तभाषणं, पश्चान्मुखवस्त्रिका प्रतिलेखनं, तदनु वन्दनकयुगलं, वन्दनानन्तरं कायोत्सर्गचिन्तितं यत्तपः तत्प्रत्याख्यानेन अथ तपोविधानं–तपःकरणं ॥१३॥ तदेवं तपः कथं चिन्तितं तदाह—

अत्र कायोत्सर्गे पूर्वं चारित्राद्याचाराणां पृथक्त्वेनालोचितानामिदानीं संमिलितानामपि शोधनार्थमयं कायोत्सर्गः संभाव्यते, अस्मिन्नुत्सर्गे श्रीवर्धमानविहितं षाण्मासिकतपो यतिरेवं चिन्तयति, हे प्राणिन् ! श्रीवर्द्धमानतीर्थे वर्तमानस्तद्विहितं षाण्मासिकं तपः कर्तुं समर्थो न वा ?, प्राणी प्राह–न शक्नोमि, तर्हि एकेन दिनेनोनं षाण्मासिकं कर्तुं शक्तोऽसि ?, प्राणी प्राह–न शक्नोमि, तर्हि द्वित्रिचतुःपंचदिनोनं षाण्मासिकं तपः कर्त्तुं शक्नोषि ? पुनर्वदति–न शक्तोऽस्मि, तर्हि षड्सप्ताष्टनवदशदिनोनं षाण्मासिकं कर्तुं शक्तोऽसि ?, पुनर्वदति–न शक्तोऽस्मि, एवमेकादशादि, ततः पंच पंचदिनवृद्ध्या क्रमेण मासं यावत् चिन्तनीयं, अथ पुनः पञ्चमे मासे सैव युक्तिः, आद्यमासवच्चिन्तनीयं, एवं चतुर्थे मासे सैव युक्तिः, एवं तृतीये द्वितीयेऽपि, ततः प्रथमे मासे ततस्त्रयोदशदिनं यावत्–त्रयोदशदिनोनं मासं कर्तुं शक्तोऽसि न वा ?, तत्रापि वदति–न शक्तोऽस्मि, ततस्त्रयोदशदिनोर्ध्वं चतुस्त्रिंशदादि ऊनं चिन्तयेत्, कथं ?, द्व्यहान्या द्व्यहान्या, यथा चतुस्त्रिंशत् द्वात्रिंशत् त्रिंशत् अष्टाविंशतिः षड्विंशतिः चतुर्विंशतिः द्वाविंशतिः एवं चतुर्थं यावत् चिन्तयति, ततोऽप्याचाम्लादि नमस्कारसहितं यावत् यत्तपः तद्दिने कर्तमुद्यतः तत्तपः चेतसि निधाय पश्चाद्

नियमसो उ दायव्वा। गहणे यऽभिग्गहाणं पुव्वग्गहिए निवेएउं ॥१॥ चाउम्मासिय वरिसिय उस्सग्गो खित्तदेवयाए उ। पक्खिय सिज्जसुरीए करेंति चउमासिए वेगे ॥२॥ ॥१४१॥ अथ विहितप्रतिक्रमणादिकृत्यः पश्चात् किं कुरुते तदाह—

**पहरंमि अइक्कंते गुरुमुणिवीसामणाइकिच्चेहिं। पोत्तिं पेहिय राइयसंथारं संदिसावेइ ॥१४२॥**
**अणुजाणह संथारं निसिही नमो खमासमणगाण इय भणिउं। विहिकयसंथारठिय चेइय वंदित्तु सरइ जिणे॥१४३॥**

अथ प्रहरे अतिक्रान्ते–शर्वरीप्रथमयामे व्यतीते पश्चात् गुरुमुनिविश्रामणादिकृत्यं कृत्वा कामपि निशिथिनीं नीत्वा–कियन्मात्रां रात्रिमुल्लंघ्य लघुक्षमाश्रमणपूर्वं पोतिकां प्रतिलिख्य पश्चात् लघुक्षमाश्रमणयुगलेन रात्रिसंस्तारकं संदेशापयति, रात्रिसंस्तारकं संस्थापयामि करोम्यहं च इति भणति, यदाहुः–"सज्झायझाणं गुरुजणगिलाणवीसामणाइकज्जेहिं। जामंमि वइक्कंते वंदिय पेहिंति मुहपोत्तिं ॥१॥ पढमंमि खमासमणे राईसंथारसंदिसावणियं। पभणंति पुणो बिइए राईसंथारए ठामि ॥२॥ ॥१४२॥ तथा संस्तारकविधिकरणोद्यतः साधुरनुजानीत संस्तारं निस्सिही नमो खमासमणाणं,निस्सीही सर्वव्यापारनिषेध इत्यर्थः,यदाहुः–'सक्कत्थय पभणंता संथारुत्तरपट्टयं च पेहित्ता। जोइत्ता जाणुवरि ठाविय भूमि पमज्जंति ॥१॥ तं तत्थ अच्छुरित्ता करजुअलं इत्थ निसिय पभणंति। अणुजाणउ संथार निस्सीही नमो खमासमण पुज्जाणं॥२॥ ठाऊणं संथारे पुत्तिं पेहित्तु तिन्नि वाराउ। नवकार सामाइयतिसमुच्चरिउं समासेणं ॥३॥ कयचउसरणाइविही अट्ठारसपावठाण वोसिरिउं। समरइ पच्चक्खाणं काउं परमिट्ठिसरणं च ॥४॥ अणुजाणह परम गुरू गुरुगुणरयणेहिं भूसियसरीरा। बहुपडिपुन्ना पोरिसि राईसंथारए ठामि ॥५॥ अणुजाणह संथारं बाहुवहाणेण वामपासेणं। कुक्कुडि पायपसारण अतरत पमज्जए भूमिं ॥६॥ संकोडिय संडासा उव्वट्टंते य कायपडिलेहा। दव्वाई उवओगं उस्सासनिरुंभणा-

गुरुसमक्षं आगारशुद्ध्या प्रत्याख्याति, तत्रागमयुक्तिरसौ–यथा आदितीर्थे वार्पिकं तपः, अन्यतीर्थकराणां तीर्थे आष्टमासिकं, चरमजिनतीर्थेपु पाण्मासिकं, यदाह–संवच्छरमुसभजिणेत्यादि ॥१४॥ अथ प्रत्याख्यानाधिकारात् तत् प्रत्याख्यानं कतिधेति गाथायुग्मेन इत्याशंक्याह—

**अणागय १ मइक्कंतं २ कोडीसहियं ३ निअंटिअं ४ चेव । सागार ५ मणागारं ६ परिमाणकडं ७ निरवसेसं ८॥१५॥**
**संकेयं चेव अद्धाए पच्चक्खाणं तु दसविहं होइ । सयमेवऽणुपालणियं दाणुवएसे जह समाही ॥१६॥**

अथ प्रत्याख्यानविवरणं, तत् तपः, प्रत्याख्यानमादौ द्वेधा–मूलगुणप्रत्याख्यानमुत्तरगुणप्रत्याख्यानं च, इदमप्येकैकं हि द्विधा–देशविरतिसर्वविरतिभेदात् ,तत्र यतिश्रावकयोरनागतादि दशधा प्रत्याख्यानं, यदाहुः–पच्चक्खाणं उत्तरगुणेसु खमणाइयं अणेगविहं। तेण य इहयं पगयं तंपिय इणमो दसविहं तु ॥१॥ अर्थश्च–प्रत्याख्यानं मूलोत्तरगुणेपु क्षपणादिकं–मासोपवासाद्यनेकविधं चतुर्थपष्ठाष्टमादिरूपं, तदपि तन्मूलभेदापेक्षया दशविधं, तद्यथा–आदावनागतप्रत्याख्यानं १ अनागते काले पर्युषणाद्यर्वाक् ग्लानत्ववैयावृत्त्यादिकारणसद्भावे यत्तपोऽष्टमादि क्रियते तदनागतप्रत्याख्यानं १, यदाहुः–होहिइ पज्जोसवणा मम य तया अंतराइयं हुज्जा। गुरुवेयावच्चेणं तवस्सि गेलन्नया चेव ॥ १ ॥ सो दाइ तवोकम्मं पडिवजइ जं अणागए काले । एयं पच्चक्खाणं अणागयं होइ नायव्वं ॥२॥ १। अथ द्वितीयं अतिक्रान्तं–अतिक्रान्तप्रत्याख्यानं यत् पर्युषणादिपर्वणि अतिक्रान्ते यत्तपः क्रियते तत्, यदाहुः–"पज्जोवसणाइ तवं जो खलु न करेइ कारणज्जाए। गुरुवेयावच्चेणं तवस्सिगेलन्नया चेव ॥१॥ सो दाइ तवोकम्मं पडिवज्जइ तं

कासी। सव्वजिणाणं पडिमा वन्नपमाणेहिं नियएहिं ॥१॥ तथेह बहुवक्तव्यमस्ति 'चत्तारि अट्ठ दस दो य' इत्यस्य तन्न लिख्यते ग्रन्थगौरवभयात्, तथा श्रीशत्रुंजयसिद्धक्षेत्रस्मरणं, तथा सम्मेतगिरिप्रमुखाणि समस्तप्रशस्ततीर्थान्यहं परमभक्त्या वन्दे, जिनानां दीक्षादिकल्याणकस्थानत्वात्, यदाहुः—"अट्ठावयंमि उसभो वीरो पावाइ चंप वसुपुज्जो। उज्जयंतम्मि नेमी संमेए सेसया सिद्धा ॥२॥१४४॥ अथ पुनः तीर्थस्मरणे शाश्वतजिननामान्याह—

**उसभं चंदाणण वारिसेण सिरिवद्धमाण तित्थयरं। सीमंधर जुगमंधर बाहु सुबाहुं च वंदामि ॥१४५॥**

तत्र ऋषभचन्द्राननवारिषेणवर्द्धमानतीर्थंकरान् वन्दे स्वर्गमृत्युपातालप्रासादगतान् अनुसरामि, तथा श्रीसीमंधरादीन् विंशतिं विहरमाणजिनान् वंदे, तथा जंबूद्वीपे महाविदेहक्षेत्रे सीमंधर १ जुगमंधर २ बाहु ३ सुबाहु ४ प्रभृतयश्चत्वारो जिना विहरमाणाः—विहारं कुर्वाणास्सन्ति, तथा धातकीखंडे महाविदेहक्षेत्रयुग्मं तत्राष्टौ तीर्थंकराः संति, यथा श्रीसुजात १ श्रीस्वयंप्रभु २ श्रीऋषभानन ३ श्रीअनंतवीर्य ४ श्रीसूरप्रभ ५ श्रीविशाल ६ श्रीवज्रधर ७ श्रीचन्द्राननाः ८, तथा पुष्करवरद्वीपार्द्धे महाविदेहक्षेत्रयुग्मं, तत्राप्यष्ट तीर्थंकराः, श्रीचन्द्रबाहु १ श्रीभुजंगमस्वामी २ ईश्वर ३ श्रीनेमिप्रभ ४ श्रीवीरसेन ५ श्रीमहाभद्र ६ श्रीदेवयशाः ७ श्रीअजितवीर्यः ८, एवं विंशतिर्जिनाः ॥१४५॥ अथ संस्तारकस्थः अकृतनिद्रः पूर्वमुनीन् स्मरति तद्गाथायुग्मेनाह—

**पुंडरियं बाहुबलिं भरहं सगरं सणंकुमारमुणिं। विण्हुं गयसुकुमालं पसन्नमेअज्जसालिमुणिं ॥१४६॥**

**धन्नं दसन्नभद्दं चिलाइपुत्तं उदायणं जंबुं। सुदरिसणं थूलिभद्दं अवंतिवइराइ मुणिचंदे ॥१४७॥**

आदौ पुंडरीकनामानं गणधरं, तदनु बाहुबलिं भरतं सगरं—सगरनामानं सनत्कुमारं विष्णुकुमारं गयसुकुमारं—गयसुकुमालं

अइच्छिए काले। एयं पच्चक्खाणं अइकंतं होइ नायव्वं ॥२॥" अथ तृतीयं कोटीसहितं प्रत्याख्यानं, एकस्य निष्ठाकाले अन्यस्य च ग्रहणकाले प्रत्याख्यानस्याद्यन्तकोटिद्वयमीलनात् कोटीसहितं ३, यदाहुः–पट्ठवणओ य दिवसो पच्चक्खाणस्स निट्ठवणओ अ। जहियं समंति दुन्निवि तं भन्नइ कोडिसहिय तु ॥१॥ अथ चतुर्थं नियन्त्रितप्रत्याख्यानं–मासे २ अमुष्मिन् दिवसे यदष्टमादि विधेयं हृष्टेन ग्लानेन वा तन्नियंत्रितं, यदाहुः–मासे २ उ तवो अमुगो अमुगोत्ति अमुगदिवसंमि। हट्ठेण गिलाणेणवि कायव्वो जाव उस्सासो ॥१॥ विशेषश्चायं–तच्चतुर्दशपूर्विषु जिनकल्पिकेषु प्रथमसंहननेन सह व्यवच्छिन्नं, उक्तं च–"चउदसपुव्वी जिणकप्पिएसु पढमंमि चेव संघयणे। एयं वुच्छिन्नं खलु थेरावि तया करेसी या ॥१॥ ४, अथ पंचमं साकारं–साकारप्रत्याख्यानं, सहाकारैर्महत्तराद्यैर्यद् वर्तते, यदाहुः–महयरयागारेहि अन्नत्थ य कारणंमि जायंमि। जो भत्तपरिच्चायं करेइ सागारकडमेयं ॥१॥ ५। अथ षष्ठमनाकार-प्रत्याख्यानं, न विद्यते महत्तरादिकारणं यत्र तदनाकारं, अथवा न कुर्वन्ति आकारान्–अपवादान्, वने दुर्भिक्षतायां च भोजना-भावान्न जीविष्यामीति ज्ञात्वा अनाकारप्रत्याख्यानं प्रत्याख्याति, तदाहुः–"निज्ञायकारणंमी महयरया नो करंति आगारं। कंतार-वित्तिदुब्भिक्खयाइए तं निरागारं ॥१॥ अपर नाम निराकारमपि ६। अथ सप्तमं परिमाणकृतं, परिमाणकृते प्रत्याख्यानं दत्तिकव-लआदीयत्तया परिमाणं यत्र तत, दत्तीहिं कवलेहि य घरेहिं भिक्खाहि अहव दव्वेहिं। जो भत्तपरिच्चायं करेइ परिमाणकडमेयं ॥१॥ ७। अथाष्टमं निरवशेषं–निरवशेषप्रत्याख्यानं सर्वाशनपानत्यागान्निरवशेषं, यदाहुः–"सव्वं असणं सव्वं च पाणयं सव्वखज्ज-पिज्जविही। वोसिरइ सव्वभावेण इय भणियं निरवसेसं तु ॥१॥ ८। तथा नवमं संकेतं–संकेतप्रत्याख्यानं अंगुष्ठमुष्टिग्रन्थ्यादिचिह्नो-पलक्षितं, यदाहुः–"अंगुठ्ठ मुट्ठी गंठी घरसेऊसामथिबुगजोइक्खे। भणियं संकेयमेयं धीरेहिं अणंतनाणीहिं ॥ १ ॥" अंगुष्ठमुष्टि-

सुसाधवः जिनमतं च मम प्रमाणं इति लक्षणं सम्यक्त्वं यत्र धर्मे सः ॥१५१॥ पूर्वोक्तविधिना साधुः शयनं कथं कुरुते तदाह—

**इच्चाइ भणिय समरियनवकारो सुअइ अप्पनिद्दाए। समए जग्गिय एवं कुणइ मुणी पुणवि दिणचरियं ॥१५२॥**

इत्यादि पूर्वोक्तविधिना भणित्वा तथा च स्मृतनमस्कारः अल्पनिद्रया—स्तोकनिद्रया स्वपिति—शयनं करोति, तथा च समये—प्रस्तावे जाग्रयित्वा मुनिः—साधुः पुनरपि दिनचर्यां दिवसक्रियां करोति—विधत्ते ॥१५२॥ अथ दिनचर्यायाः फलमाह—

**इय सुद्धसमायारो बहुधम्ममणोरहुल्लसियचित्तो। तिन्नभवजलहिमप्पं मन्नंतो लहइ सिद्धिसुहं ॥१५३॥**

इति—पूर्वोक्तविधिना शुद्धसमाचारो—निर्मलक्रियाविशेषः प्राणी बहुधर्ममनोरथोल्लसितचित्तः तीर्णजलधिमात्मानं मन्यमानः सिद्धिसुखं—शिवसुखं लभते—प्राप्नोति ॥१५३॥ अथ ग्रन्थकृत् ग्रन्थमुपसंहरन् निजगुरुनामांकितां गाथां चाह—

**सिरिकालियसूरीणं वंसुब्भवभावदेवसूरीहिं। संकलिया दिणचरिया एसा थोवमइजइजोग्गा ॥१५४॥**

श्रीकालिकसूरीणां—कालिकाचार्याणां वंशोद्भवैः—अन्वयोत्पन्नैः श्रीभावदेवसूरिभिः संकलितेयं दिनचर्या, कथंभूता ?—स्तोकमतियतियोग्या ॥१५४॥ समाप्ता यतिदिनचर्या सावचूरिः ॥

इति श्रीकालिकाचार्यसन्तानीयश्रीभावदेवसूरिरचिता श्रीमतिसागरसूरिविवृता

**श्रीयतिदिनचर्या समाप्ता**

मुनि चंदोदय विजय
ना शिष्य मुनि दक्षप
ज्ञान भंडार.

मोचनं ग्रंथिच्छोटनं गृहप्रवेशं स्वेदशोपं उच्छ्वासान् थिवुगशोपं प्रदीपज्वलनं इत्यादि संकेतयति तत् ९ । तथा दशमं अद्धाप्रत्याख्यानं, तत्र अद्धा-कालस्तदुपलक्षितं मुहूर्तादिकालसहितं यत् तत् १०। स्वयमेवानुपालनीयं, न कारणादिनिषेधः, आहारदानोपदेशयोः यथा समाधिः ॥ पुनस्तदद्धाप्रत्याख्यानं दशधा भवति, यदाहुः-अद्धापच्चक्खाणं तं जं कालप्पमाणछेएण। पुरिमड्ढपोरिसीए मुहुत्तमासद्धमासेहिं ॥१॥ ॥१६॥ तदद्धाप्रत्याख्यानं कथं दशधा तदाह—

नवकारपोरिसीए पुरिमुड्ढिक्कासणेगठाणेसुं । आयंबिलअभत्तट्ठे चरिमे य अभिग्गहे विगई ॥१७॥

तत्र दशविधप्रत्याख्याने प्रथमं नवकारसहितं १ द्वितीयं प्रत्याख्यानं पौरुषी २ तृतीयं पुरिमार्द्धप्रत्याख्यानं ३ चतुर्थमेकाशनप्रत्याख्यानं ४ पंचमं एकस्थानप्रत्याख्यानं ५ षष्ठमाचाम्लप्रत्याख्यानं ६ सप्तममभक्तप्रत्याख्यानं ७ अष्टमं चरमप्रत्याख्यानं, तद् द्वेधा-भवचरमं दिवसचरमं च ८ नवममभिग्रहप्रत्याख्यानं ९ दशमं विकृतिप्रत्याख्यानं १० ॥१७॥ अत्र उद्देशनिर्देशयुक्त्या कानि तानि दश प्रत्याख्यानानी(के ते दशसु प्रत्याख्यानेषु आकारा इ)त्याशंक्याह—

दो चेव णमुक्कारे आगारा छच्च पोरिसीए उ । सत्तेव य पुरिमड्ढे एगासणगंमि अट्ठेव ॥१८॥

सत्तेगट्ठाणेसु अ अट्ठेव य अंबिलंमि आगारा । पंचेव अभत्तट्ठे छप्पाणे चरिम चत्तारि ॥१९॥

तत्र आकारद्विकसहितं नमस्कारप्रत्याख्यानं, तच्चेदं-उग्गए सूरे नमुक्कारसहियं पच्चक्खाइ चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं वोसिरइ १, व्याख्या-उद्गते सूर्ये-सूर्योदयादारभ्य नमस्कारसहितं प्रत्याख्यानं करोति, इदं गुरोर्वचः, छात्रस्तु प्रत्याख्यामीति वदति, एवं व्युत्सृजतीत्यत्रापि वाच्यं, कथं ?-चतुर्विधमप्याहारं अशनं पानं खाद्यं स्वाद्यं

तिविहं चउविहं वा आहारं असणं पा० खा० सा० अ० सह० पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं सव्व-समाहिवत्तियागारेणं वोसिरइ २, अर्थश्च पुरुषः प्रमाणमस्याः सा पौरुषी—छाया तद्युक्तः कालोऽपि पौरुषी, प्रहर इत्यर्थः, केवलं याम्योत्तररेखायाः आत्मनश्चान्तरे पूर्वपश्चिमरेखैव छायेति ग्राह्या, तां पौरुषीं प्रत्याख्याति, अत्र षडाकाराणां मध्ये प्रथमौ द्वौ पूर्ववत्, अन्यत्र प्रच्छन्नकालात् दिङ्मोहात् साधुवचनात् सर्वसमाधिप्रत्ययाकाराच्च, प्रच्छन्नता च कालस्य मेघेन रजसा गिरिणा वाऽन्तरितत्वात्सूर्यस्यादर्शने, तेन अपूर्णामपि पौरुषीं ज्ञात्वा पूर्णां भुंजानस्य न भंगः, ज्ञात्वा त्वर्धभुक्तेनापि तथैव स्थातव्यं यावत् पौरुषी पूर्यते, ततः परं भोक्तव्यं, अन्यथा तु भंग एव ३, दिङ्मोहादिषु यदा पूर्वामपि पश्चिमेति जानाति तदा पौरुष्यामपूर्णायामपि न भंगः, मोहविगमे तु पूर्वविधिः ४, साधुवचनं—उद्घाटापौरुषीत्यादिकं भ्रान्तिकारणं तत् श्रुत्वा भुंजानस्य न भंगः, भुंजानेन तु ज्ञाते अन्येन वा कथिते प्राग्विधिर्विधेयः, सर्वसमाधिः—गाढातंकादिरहितत्वं, गाढातंकादौ च तत्प्रत्यय आकारः—प्रत्याख्यानापवादो भवति, अयमभिप्रायः—आकस्मिकतीव्रशूलादिदुःखोद्भवार्तरौद्रध्यानोपशमाय सर्वेन्द्रियसमाध्यर्थं पथ्यौषधादि कुर्वाणस्य अपूर्णायामपि पौरुष्यां न भंगः, जाते तु समाधौ पूर्वविधिः, उक्तं च—चउहाऽऽहारं तु नमो रत्तिंपि मुणीण सेस तिय चउहा। निसिपोरिसि पुरिमेगासणाइ सड्ढाण दुतिचउहा ॥१॥ तथा सार्द्धपौरुषीप्रत्याख्यानं तु पौरुषीतुल्यमाकारैः, परन्तु कालतो भेदः ३। अथ पूर्वार्द्धप्रत्यख्याने तस्मिन् सप्ताकाराः, तत्सूत्रमिदं—सूरे उग्गए पुरिमड्ढं पच्चक्खाइ दुविहं तिविहं चउव्विहंपि आहारं असणं पाणं खा० सा० अ० स० पच्छ० दिसा० साहु० महत्तरागारेणं सव्व० वोसिरइ, अर्थश्च—पूर्वं च तदर्धं च पूर्वार्धं—दिनस्यार्धं प्रहरद्वयं तत् प्रत्याख्याति, अत्र षडाकाराणामर्थः प्राग्वत्, महत्त० महत्तरं—प्रत्याख्यानानुपालना-

दपि बहुतरनिर्जरानिमित्तं पुरुषान्तरासाध्यं ग्लानचैत्यसंघादिकार्यं तदेवाकारः–अपवादो महत्तराकारः तस्मादर्वागपि भुंजानस्य न
भंगः, यश्चात्रैव महत्तराकारपाठो न नमस्कारसहितादौ तत्र कालमहत्त्वाल्पत्वे हेतू, तथा अपार्धप्रत्याख्यानमप्येतत्तुल्यमाकारैः,
परमिहापि कालतो भेदः ४ । अथैकाशनप्रत्याख्यानं, एकाशनप्रत्याख्याने अष्टावाकाराः, तत्सूत्रं–एगासणं पच्चक्खाइ दु०
ति० चउविहंपि आहारं असणं ४ अन्न० सह० सागारिआगारेणं आउंटणपसारेणं गुरुअब्भुट्ठाणेणं पारिट्ठाव-
णियाणरेणं मह० सव्व० वोसिरइ अर्थश्च–एकं–सकृत् अशनं–भोजनं एकं वा आसनं–पुताचालनतो यत्र तदेकाशनं एकासनं
वा, प्राकृते द्वयोरप्येकासणमितिरूपं, एवं द्वयासनमपि, अत्र प्रथमावन्त्यौ चाकारौ मिलितौ चत्वारस्तेषामर्थः प्राग्वत्, सहागारेण
वर्तते सागारः स एव सागारिको–गृहस्थः स एवाकारः–तस्य पश्यतोऽन्यत्रापि गत्वा भुंजानस्य न भंगः, तत्समक्षं भोजने तु महा-
दोषः, यदाह–छक्कायदयावंतोऽवि संजओ दुल्लहं कुणइ बोहिं । आहारे नीहारे दुगुंछिए पिंडगहणे य ॥ १ ॥" गृहस्थस्य यद्दृष्टं
तु भोजनं न जीर्यते स सागारिको वंदिकादिर्वा, 'आउंटण' इति आकुंचनं–जंघासनसंकोचनं प्रसारणं–तस्या एव ऋजुकरणं, आकुंचने
प्रसारणे च क्रियमाणे किंचिदासनं चलति तत्रापि न भंगः, 'गुरु०' इति गुरोः–आचार्यस्य प्राघूर्णकस्य वा साधोरागच्छतोऽभ्यु-
त्थानं विधाय पश्चाद् भुंजतोऽपि न भंगः, 'पारिट्ठा' इति परिष्ठापनं–सर्वथा त्यजनं प्रयोजनमस्येति पारिष्ठापनिकं–अधिकीभूतं
वस्तु तदेवाकारः पारिष्ठापनिकाकारः अयमाकारः साधोरेव, उक्तं च–"विहिगहियं विहिभुत्तं उव्वरियं जं भवे असणमाई । तं
गुरुणाऽणुन्नायं कप्पइ आयंबिलाईणं ॥१॥" श्रावकस्त्वखंडसूत्रत्वादुच्चरति, तत्र हि त्यज्यमाने महान् दोषः, गुर्वाज्ञया भुज्यमाने
गुणः, ततस्तस्य भुंजानस्यापि न भंगः, अनेकाशनं परिहरति ४ ॥१८॥ अथैकस्थानप्रत्याख्यानं, तस्मिन् सप्ताकाराः, तत्सूत्रमिदं–

अपरेषामाकाराणामर्थस्तु प्राग्वत् ॥

अथ प्रत्याख्यानभंगकाः, ते च स सप्तचत्वारिंशत् शतं भंगका भवन्ति १४७, ते चैवं–तिन्नि तिया तिन्नि दुया तिन्नि इक्का य हुंति जोगेसु। तिदुएगं तिदुएगं तिदुएक्कं चेव करणाइं ॥१॥ न्यासः ३ ३ ३ २ २ २ १ १ १। ३ २ १ ३ २ १ ३ २ १ पढमे लब्भइ एगो सेसेसु तिएसु तिय तिय तियं च । दो नव तिय दो नवगा तिगाल सीयालभंगसयं ॥२॥ न्यासः १ ३ ३ ३ ९ ९ ३ ९ ९ तथाहि–मणवयणकाय १ मणवयण २ मणतणु ३ वयतणु ४ मण ५ वयण ६ काय ७ जोगि सग सत्त। करणकारणाणुमय इति जुय तिकाल सीयाळभंगसयं ॥१॥ ३ ३ ३ २ २ २ १ ११,३ २ १ ३ २ १ ३ २ १,१ ३ ३ ३ ९ ९ ३ ९ ९ मनसा वचसा कायेण न करोति न कारयति नानुमतिं दत्ते १,मनसा वचसा कायेन न करोति न कारयति १ मनसा वचसा कायेन न करोति न अनुमतिं दत्ते २ मनसा वचसा कायेन न कारयति न अनुमतिं दत्ते३, त्रयोऽमी एकस्तु पाश्चात्यः एवं चत्वारः ४, मनसा वचसा कायेन न करोति १ मनसा वचसा कायेन न कारयति २ मनसा वचसा कायेन न अनुमतिं दत्ते ३,त्रयोऽमी चत्वारः पूर्वोक्ताः एवं सप्त भंगकाः ७, तथा मनसा वचसा न करोति न कारयति न अनुमतिं दत्ते १ मनसा कायेन न करोति न कारयति न अनुमतिं दत्ते २ मनसा वचसा न करोति न कारयति नानुमतिं दत्ते ३ एते त्रयः, सप्त च पूर्वोक्ता इति दश, मनसा वचसा न करोति न कारयति १ मनसा कायेन न करोति न कारयति २ वचसा कायेन न करोति कारयति ३ मनसा वचसा न करोति नानुमतिं दत्ते ४ मनसा कायेन न करोति नानुमतिं दत्ते ५ वचसा कायेन न करोति नानुमतिं दत्ते ६ मनसा कायेन न कारयति नानुमतिं दत्ते ७ मनसा वचसा न कारयति न अनुमतिं दत्ते ८ वचसा कायेन न कारयति नानुमतिं दत्ते

९ एते नव, दश पूर्वोक्ताः, एवं एकोनविंशतिर्भङ्गाः १९, मनसा वचसा न करोति १ मनसा कायेन न करोति २ वचसा कायेन न करोति ३ मनसा वचसा न कारयति ४ मनसा कायेन न कारयति ५ वचसा कायेन न कारयति ६ मनसा वचसा न अनुमतिं दत्ते ७ मनसा कायेन न अनुमतिं दत्ते ८ वचसा कायेन न अनुमतिं दत्ते ९, एते नव, एकोनविंशतिः पूर्वोक्ताः, एवं अष्टाविंशतिर्भङ्गाः २८, तथा मनसा न करोति न कारयति नानुमतिं दत्ते १ वचसा न करोति न कारयति नानुमतिं दत्ते २ कायेन न करोति न कारयति नानुमतिं दत्ते ३, त्रयोऽमी, अष्टाविंशतिः पूर्वोक्ताः, एवं भंगाः एकत्रिंशत् ३१, तथा मनसा न करोति न कारयति १ वचसा न करोति न कारयति २ कायेन न करोति न कारयति ३ मनसा न क० न अनुमन्यते ४ वचसा न करोति न अनुमतिं दत्ते ५ कायेन न करोति न अनुमतिं दत्ते ६ मनसा न कारयति न अनु० ७ वचसा न कारयति न अनु० ८ कायेन न कारयति न अनु० ९, एते नव, एकत्रिंशत् पूर्वोक्ताः, एवं चत्वारिंशत् ४०, तथा मनसा न करोति १ वचसा न करोति २ कायेन न करोति ३ मनसा न कारयति ४ वचसा न कारयति ५ कायेन न कारयति ६ मनसा न अनुमतिं दत्ते ७ वचसा न अनुमतिं दत्ते ८ कायेन न अनुमतिं दत्ते ९, एते नव, पूर्वोक्ताः चत्वारिंशत्, एवं भंगाः एकोनपंचाशत्, एते एव अतीतानागतवर्तमानैः कालैर्गुणिताः सप्तचत्वारिंशत् शतं १४७ भंगा भवन्ति, ते च प्रत्याख्यानभंगका ज्ञेयाः, उक्ताः प्रत्याख्यानभंगकाः, अधुना तच्छुद्धिमाह—

सा च षोढा, यदाहुः—"सोही पच्चक्खाणस्स छव्विहा समणसमयकेऊहिं । पन्नत्ता तित्थयरेहिं तमहं वुच्छं समासेणं ॥१॥" यथा श्रद्धानशुद्धिः १ ज्ञानशुद्धिः २ विनयशुद्धिः ३ अनुभाषणाशुद्धिः ४ अनुपालनाशुद्धिः ५ भावनाशुद्धिश्च ६, यदाहुः—"सा

पुण सद्दहणा १ जाणणा य २ विणय ३ ऽणुभासणा चेव ४। अणुपालणाविसोही ५ भावविसोही भवे छट्ठा ६ ॥१॥" तत्र श्रद्धानशुद्धिमाह—पच्चक्खाणं सव्वन्नुदेसियं जं जहिं जया काले। तं जइ सद्दहइ नरो तं जाणसु जाणणासुद्धिं॥१॥" अथ ज्ञानशुद्धिमाह—'पच्चक्खाणं जाणइ कप्पे जं जंमि होइ कायव्वं। मूलगुण उत्तरगुणे तं जाणसुजाणणासुद्धिं॥२॥'अथ विनयशुद्धिमाह—'कियकम्मस्स विसुद्धिं पउंजई जो अहीणमइरित्तं। मणवयणकायगुत्तो तं जाणसु विणयसुद्धिं तु ॥३॥' अथ अनुभाषणाशुद्धिमाह—'अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं। पंअलिउडो अभिमुहो तं जाणसु भावणासुद्धिं ॥४॥' अथ अनुपालनाशुद्धिमाह—'कंतारे दुब्भिक्खे आयंके वा महइ समुप्पन्ने। जं पालियं न भग्गं तं जाणसु पालणासुद्धिं ॥५॥ अथ भावविशुद्धिमाह—'रागेण व दोसेण व परिणामेण·व न दूसियं जं तु। तं खलु पच्चक्खाणं भावविसुद्धं मुणेयव्वं ॥६॥ अथ प्रत्याख्यानशुद्ध्यन्तरमाह—'फासियं १ पालियं चेव २, सोहियं ३ तीरियं तहा ४। किट्टिय ५ माराहियं चेव ६, जइज्ज एयारिसंमि य ॥१॥ अर्थश्च—स्पृष्टं—विधिना काले प्राप्तं १ पालियं—पुनः २ उपयोगप्रतिजागरितं २, उक्तं च—"उचिए काले विहिणा पत्तं जं फासियं तयं भणियं। तह पालियं च असई सम्मं उवओगपडियरियं ॥१॥" अथ शोधितं गुरुदत्तशेषभोजनासेवनेन ३, तीरितं पूर्णेऽप्यवधौ किंचित्कालावस्थानेन ४, उक्तं च—"गुरुदत्तसेसभोअणसेवणे तं विसोहियं जाण। पुन्नेऽवि थेवकालावत्थाणा तीरियं होइ॥१॥" तथा कीर्तितं भोजनकाले अमुकं प्रत्याख्यातं मयेति न भोक्ष्ये इति स्मरणेन ५, आराधितं—सर्वैरेभिः प्रकारैर्निष्ठां नीतं ६, उक्तं च—"भोयणकाले अमुगं पच्चक्खायंति सरइ किट्टियय। आराहियं पयारेहिं सम्ममेएहिं पडियरियं ॥१॥" अथ प्रत्याख्यानफलमाह—पच्चक्खाणंमि कए आसवदाराइं हुंति पिहियाइं। आसववुच्छेएणं तण्हावुच्छेयणं होइ ॥१॥ तण्हावुच्छेएणं अउलोवसमो भवे मणुस्साणं।

अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥२॥

अथ प्रत्याख्यानप्रधानफलमाह—पच्चक्खाणमिणं सेविऊण भावेण जिणवरुदिट्ठं। पत्ता अणंतजीवा सासयसुक्खं अणाबाहं ॥१॥ अथ प्रत्याख्यानं कथं करोति?, कियकम्माइविहिन्नू उवओगपरो अ असढभावो अ। संविग्गंथिरपइन्नो पच्चक्खावितओ होइ ॥१॥ तथा 'एत्थं पच्चक्खायापच्चक्खावितयाण चउभंगी। जाणगऽजाणपएहिं निप्फन्ना होइ नायव्वा ॥१॥ यथा ज्ञो ज्ञस्य पार्श्वे प्रत्याख्यातीति शुद्धः १ ज्ञोऽज्ञस्य–मूर्खस्य पार्श्वे प्रत्याख्यातीति शुद्धः २ अज्ञो ज्ञस्य पार्श्वे प्रत्याख्यातीति शुद्धः ३, अज्ञोऽज्ञस्य पार्श्वे करोतीति न शुद्धः ४ चतुर्भंगी ॥२०॥ अथ नमस्कारसहितादिषु प्रत्याख्यानेषु कान्याद्याक्षराणीत्याशंक्याह—

नवकारसहिय १ पोरसि २ सड्ढा ३ पुरिमे ४ अवड्ढ ५ उववासो ६।
उ १ पो २ सा ३ सू ४ सू ५ सू ६ नेया पढमक्खरा कमसो ॥ २१ ॥

नमस्कारसहिते तथा पौरुष्यां पुरिमार्द्धे अपार्धे उपवासे च एतानि क्रमशः–अनुक्रमेण प्रथमाक्षराणि ज्ञातव्यानि, एतानि कानि?, उ पो सा सू सू सू, यथा उग्गए सूरे नमुक्कारसहियं पच्चक्खाइ १ पोरसिअं० उग्गए सू० चउ० २ साढपोरसी० उग्गए० ३ सूरे उग्गए पुरिमड्ढं प० ४ सूरे उग्गए अवड्ढं० प० ५ सूरे उग्गए अभत्तठं पच्चक्खाइ ६ ॥ अथ यथासंख्यं व्याख्यानं बोद्धव्यम् ॥२१॥ अथ प्रत्याख्याने पौरुष्यादौ कृते कियान् कर्मक्षयः तदाह—

पोरिसि चउत्थ छट्ठं काउं कम्मं खवंति जे मुणिणो। तं नहु नारयजीवा वाससयसहस्सलक्खेहिं ॥२२॥

पौरुषी–पुरुषच्छाया चतुर्थं–एकोपवासरूपं षष्ठं–उपवासयुग्मरूपं एतल्लक्षणं तपः कृत्वा यत् कर्म्म सत्तागतं मुनयः–साधवः

क्षिपन्ति—निराकुर्वन्ति तत् कर्म हु निश्चितं नारकिनो जीवा वर्षशतसहस्रलक्षैः—वर्षकोटिभिर्न क्षिपन्ति—न निष्ठां नयन्ति ॥ २२ ॥ तर्हि तत्तपः कथंभूतेन मनसा विधेयमित्याशंक्याह—

**तं तु तवो कायव्वं जेण जिओ मंगुलं न चिन्तेइ। जेण न इंदियहाणी जेण य जोगा न हायंति ॥२३॥**

तथा पुनः तत् तपः कर्तव्यं येन तपसा मनः—चित्तं अमंगलं—दुध्यानं न चिन्तयति—न स्मरति, तत् किं?, येन तपसा इन्द्रियाणां स्पर्शनादीनां पंचानामपि हानिर्न भवति—निजनिजविषयक्षयो न स्यात्, येन च तपसा योगा—मनोवाक्कायरूपाः प्रतिक्रमणादयो वा हीनतां न व्रजन्ति ॥२३॥ अथ संकेतप्रत्याख्यानमल्पकष्टसाध्यं कालानियमत्वात् तस्मिन् कृते किं फलमित्याशंक्याह—

**संकेयं पुण गंठियपमुहं बद्धंमि तंमि मणवंधो। गंठिंमि य सिवसोक्खं बद्धं तो तं सया कुणह ॥२४॥**

संकेतप्रत्याख्यानं पुनर्ग्रन्थिप्रभृति—ग्रन्थ्याद्यष्टधोक्तं तदेवात्रसेयं, तस्मिन् ग्रन्थ्यादौ बद्धे मनसो बंधो भवति, गन्थिंमि च शिवसौख्यं—मोक्षः स्यात्, ततो हेतोस्तद्ग्रन्थिसहितं प्रत्याख्यानं सदा कुरुत, भो भव्या इति शेषः॥ उक्तं च—"जे निच्चमप्पमत्ता गंठिं बंधंति गंठिसहियंमि। सग्गापवग्गसुक्खं तेहिं निबद्धं सगंठिमि ॥१॥ भणिउण नमुक्कारं निच्चं विम्हरणवज्जिया धन्ना। पारंति गंठिमहियं गंठिं सह कम्मगंठीहिं ॥ २ ॥ मंमासी मज्जरओ एक्केणं चेव गंठिसहिएणं। साहंतु तंतुवाओ सुसाहुवाओ सुरो जाओ ॥३॥ इह चिंतसु अब्भासं अब्भासं सिवपुरस्स जइ महसि। अणसणसरिसं पुण्णं वयंति एयस्स समयन्नू ॥४॥२४॥ इतः—प्रभृति प्रत्याख्यानमाश्रित्य कियत् सर्वमुक्तं, तदनु साधुः किं करोतीत्याशंक्याह—

**पच्चक्खाणे सम्मं विहिए अणुसट्ठि तिन्नि य थुईओ। वड्ढंतियाउ चेइयवंदण बहुवेल पडिलेहा ॥२५॥**

प्रत्याख्याने सम्यग् विधिना—आकारविधिना विहिते—कृते पश्चात् अणुसट्ठि इति इच्छामोऽणुसट्ठिं इति भणित्वा उपविश्यादौ गुरुरेव तिस्रो वर्द्धमानस्तुतयो 'विशाल [भाल] लोचनदल'मित्यादिरूपाः पठन्ति, पश्चाद् परोऽपि साधुवर्गः, कथंभूताः ?—वर्द्धंत्यः, छंदसेतिशेषः, तदनु चैत्यादि—ततश्चैत्येषु आचार्यपरम्परया गुरुक्रमरूपया स्तोत्रेषु पठितेषु ततश्चतुर्भिः क्षमाश्रमणैराचार्यादीन् वन्दते, पश्चात् क्षमाश्रमणद्वयेन साधुः कृतपौषधश्राद्धश्च भगवन् बहुवेलं संदिसावउं ?, द्वितीयेन क्षमाश्रमणेन बहुवेलं करेमि इति भणति, बहुवेलस्यायमर्थः—सर्वकार्याणि श्रीगुरुप्रश्नपूर्वकं कार्याणि, तेन च दिवसमध्ये लघुकार्येषु पुनः २ प्रश्नः कर्तुं दुःशक्यः, तत एतत्क्षमाश्रमणद्वयेन तत्तल्लघुकार्यविषये आचार्याणामनुमतिं मार्गयति, बहुवेलासंभवान्यपि कार्याणि बहुवेलेत्युच्यते उपचारात्, गीतार्थैस्त्वन्यथापि यथागमं विचार्यं, उक्तं च-"जम्हा किच्चं गुरवो वियंति विणयपडिवत्तिहेउं वा। ऊसासाइ पमुत्तुं तयणापुच्छाइ पडिसिद्धं ॥१॥ सव्वंपि पडिकमणं अकुणंतो लहइ चउगुरू समणो। देसेण विराहंतो लहइ पुणो मासलहुयाई ॥२॥ किं च—अविहिकया वरमकयं अस्सूयवणयं वयंति समयन्नू। पायच्छित्तं जम्हा अकए गरुयं कए लहुयं ॥१॥ ततः प्रतिलेखनां विधत्ते ॥२५॥ संप्रति प्रतिलेखनाक्रमविधिः कथमित्याशंक्याह—

मुहपत्ती रयहरणं दुन्नि निसज्जाउ चोल कप्पतिगं। संथारुत्तरपट्टो दस पेहाऽणुग्गए सूरे ॥२६॥

तत्र क्षमाश्रमणद्वयेन पूर्वमादौ मुखवस्त्रिका प्रतिलेखनीया १ तदनु रजोहरणं २ पश्चाद् रजोहरणस्य द्वे निषद्ये ४ तदनु चोलपट्टः—अधःपरिधरणवस्त्रं ५ तदनु कल्पत्रिकं ८ पश्चात् संस्तारकः ९ पश्चादुत्तरपट्टः १०, एता दश प्रतिलेखना विधेयाः, कदा ?—अनुद्गते सूर्ये, यदाहुः "पडिलेहणाण गोसाऽवरण्ह उग्घाडपोरसीरु तिगं। तत्थ पहाएऽणुग्गयसूरे पडिक्कमणकरणाउ

॥१॥ इहागमे प्रतिलेखनात्रयं भणितं-एका प्रातरेव, द्वितीया उद्घाटपौरुष्यां पादोनप्रहरे, तृतीया अपराह्णे तृतीये यामे, एतास्तिस्रः प्रतिलेखनाः यथा प्रातः प्रतिक्रमणादूर्ध्वमनुद्गते सूर्ये पूर्वोक्ता दश प्रतिलेखनाः मुखवस्त्रिकाद्याः स्युः, उद्घाटपौरुष्यां पादोने प्रहरे पात्रनिर्योगः—पात्रपरिकरः सप्तविधः प्रतिलेखनीयः, तथा तत्र मुखवस्त्रिका आसनोपविष्टैः प्रतिलिख्यते, ततः प्रथमं गोच्छकः १ ततः पटलानि २ तदनु पात्रकेसरिका ३ पश्चाद् पात्रबंधः ४ तदनु पात्रकं ५ ततोऽपि रजस्त्राणं ६ तस्मात् पात्रकस्थापनं ७, तथा तृतीयप्रहरे उपकरणचतुर्दशकं, यथा प्रथमं पोतिका १ तदनु चोलपट्टः २ पश्चाद् गोच्छकः ३ पश्चात् चिलमली ४ तदनु पात्रकबंधः ५ पश्चात् पटलानि ६ ततो रजस्त्राणं ७ ततः परिष्ठापनकं ८ ततो मात्रकं ९ पश्चाद् पात्रकं १० ततोऽपि रजोहरणं ११ पश्चात् कल्पत्रिकं १४, इहान्योऽप्यौत्सर्गिकोपधिः प्रतिलेख्यः, उक्तं च—"उवगरणचउद्दसगं पडिलेहा ॥१॥" उक्तार्थेयं ॥ २६ ॥ तथा दशप्रकारप्रतिलेखनीयोपधेः परिमाणं किमित्याशंक्याह—

बत्तीसंगुलदीहं रयहरणं पुत्तिया य अद्धेणं । जीवाण रक्खणट्ठा लिंगट्ठा चोलपट्टो तु ॥२७॥

कंबलमई निसिज्जा दसिया सहिया भणिज्ज रयहरणं । दुन्नि निसिज्जा इक्का खोमी पाउंछणं बीयं ॥२८॥

तथा रजोहरणं द्वात्रिंशदंगुलदीर्घं भवति, उक्तं च—"बत्तीसंगुलदीहं चउवीसं अंगुलाइं दंडो से । अट्ठंगुला दसाओ एग परं हीणमहियं वा ॥१॥ एयं ओहपमाणं भणियं निसीहस्स पंचमुद्देसे । छव्वीस वीस दंडो छव्वारस अंगुला दसिया ॥२॥ रजोहरण-कृत्यं च—आयाणे निक्खेवे ठाण निसीयण तुयट्टसंकोए । पुव्वं पमज्जणट्ठा लिंगट्ठा चेव रयहरणं ॥ १ ॥ अथ रजोहरणपदस्यार्थ-माह—अब्भिंतर रयहरणं करेइ जं जीवरक्खणाहिंतो । बाहिररयं पमज्जइ रयहरणं तेण निद्दिट्ठं ॥१॥' तथा पोतिका च अर्द्धेन—

रजोहरणदीर्घतोऽर्द्धं भवतीत्यर्थः, तथा अर्धशब्दनिमित्तं सूत्रागतं क्रममुल्लंघ्यादौ रजोहरणं पश्चान्मुखवस्त्रिकाया व्याख्यानं विहितं, तत्र पोतिका-मुखवस्त्ररूपा, सा तु षोडशांगुलमिता दीर्घा भवति, यदाहुः-"चउरंगुलं विहत्थी एयं मुहणंतगस्स उ पमाणं। बीअं मुहप्पमाणं गणणपमाणेण इक्किक्कं ॥१॥" तत्प्रयोजनमाह-संपाइमरयरेणूपमज्जणठ्ठा वयंति मुहपत्तिं। नासं मुहं च बंधति तीए वसहिं पमज्जंतो॥१॥" तथैव द्वयं रजोहरणमुखवस्त्रिकारूपं जीवानां रक्षार्थं च लिंगार्थमपि ॥२७॥ अतो रजोहरणस्याकृति-माह-तथा कंबलमयी निषद्या-वस्त्रविशेषो दसिकाभिः सहितं रजोहरणं भणयेत्-कथयेत्, तस्मिन् रजोहरणे अपरे द्वे निषद्ये भवतः, तत्र एका क्षौमी-सौत्री निषद्या एकेन्द्रियावयवनिष्पन्नरूपा द्वितीया पादोंछनकमयी-कंबलमयी, सा तु पञ्चेन्द्रियावयवनिष्पन्नरूपा, तथा सूत्रे वस्त्रं त्रेधा-एकेन्द्रियावयवनिष्पन्नं कार्पासादि १ विकलेन्द्रियावयवनिष्पन्नं कौशेयादि २ पञ्चेन्द्रियावयवनिष्पन्नं ऊर्णादि ३ ॥२८॥ साधोः कल्पप्रमाणं किं इति विचार्याह—

**कप्पा आयपमाणा दु खोम चुक्खिक्क उन्निओ तइओ। संथारुत्तर दो करसड्ढा चोलोट्ट चउहत्थो ॥२९॥**

तथा साधोः कल्पास्त्रयो भवन्ति, किंविशिष्टाः ?-आत्मप्रमाणाः, यात्राप्रवृत्तानां स्कंधस्योपरि क्षिप्तास्तिष्ठन्ति, एतदात्मप्र-माणाः अर्द्धतृतीयहस्तविस्तृताः स्युः,एतत्प्रमाणात् स्थविराणां मनाक् सातिरेका(यूतां)अनतिरेका भवन्ति,तत्र द्वौ क्षौमौ कल्पावात्म-प्रमाणौ भवतः, तृतीयस्तु चुक्खिक्क उन्निउ इति प्रधान ऊर्णानिष्पन्नो, नानावर्णभेदरहित इत्यर्थः, यदाहुः-"कप्पा आयपमाणा अड्ढाइज्जा य वित्थडा हत्था। दो चेव सुत्तियाओ उन्नि तइओ मुणेयव्वो ॥१॥ कप्पेण जेण भिक्खा चेइयगमणं च तेण अन्नाणि। कज्जाणि नेव कुज्जा तत्तो दो सुत्तिया भणिया ॥ २ ॥ तणगहणाणलसेवानिवारणा धम्मसुक्कझाणठ्ठा। दिठ्ठं कप्पग्गहणं गिलाण-

दे-

मरणठया चेव ॥३॥ तथा संस्तारकः उत्तरपट्टः–संस्तारकाच्छादनमेतत् द्वितयं सार्द्धहस्तद्वयमानं, उक्तं च–"संथारुत्तरपट्टो अड्ढाइज्जा य आयया हत्था । दुण्हंपि य वित्थारो हत्था चउरंगुलं चेव ॥१॥ तथा चोलपट्टश्चतुर्हस्तपमाणोपेतः, उक्तं च–"दुगुणो य चौगुणो वा दुगुणो चउरंस चोलपट्टो उ । थेराण जुवाणठ्ठा सण्हे थूलंमि य विभासा ॥१॥२९॥ अथ मुखवस्त्रिकादिदशविधोपधेः प्रमाणं निरूप्य संप्रति तत्प्रतिलेखनाक्रम एव कथमित्याशंक्याह—

लहुवंदणेण पुत्तिं पडिलेहइ पढमगंमि रयहरणं । अंतो निसिज्ज पढमं मज्झण्हे बाहिराइ पुणो ॥३०॥
तुण्हिक्को इक्कमणो उवउत्तो चत्तअन्नवावारो । दयपरिणामंमि ठिओ ताहे पडिलेहणं कुज्जा ॥३१॥
अंगपडिलेहणं लहुवंदणजुअलेण संदिसावित्ता । पडिलेहइ ठवणगुरुं ठवणं ठाणे पुणो पुत्ती ॥३२॥
उवहिं संदेसाविय छोहावंदणजुएण पडिलेहे । छोहावंदण लहुवंदणा खमासमण एगट्ठा ॥३३॥
अह रविउदए वसहिं सुपमज्जिय पुंजमुद्धरेऊण । परिसोहित्ता इरिया पडिक्कमिय पमज्जए वसहिं ॥३४॥
पडिलेहा दिट्ठिकया रयहरणाई पमज्जणं विंति । कालग्गहणे पोत्तिय वसही कालप्पवेयणयं ॥३५॥

इह प्रतिलेखनासमये लघुवन्दनेन–इच्छामि खमासमणो इत्यादिरूपेण पोतिकां–मुखवस्त्रिकां प्रतिलेखयति, उत्तरार्द्धेन तत्प्रतिलेखनाक्रममाह–प्रथमप्रतिलेखनायां–प्रभातप्रतिलेखनायां अन्तर्निषद्यां–अभ्यन्तरनिषद्यां प्रतिलेखयेत्, मध्याह्ने पुनः–तृतीयप्रहरप्रतिलेखनायां प्रथमं बाह्यनिषद्यां प्रतिलेखयेत् साधुरिति शेषः ॥३०॥ केन विधिना प्रतिलेखनां करोतीत्याशंक्याह—तस्मिन् प्रतिलेखनासमये प्रतिलेखनां कुर्यात् ,यतिरितिशेषः, कथंभूतः ?–तूष्णीको–मुखरतारहितः, पुनः कथंभूतः?–एकमनाः–संकल्पविक-

ल्परहितः, पुनरपि कथंभूतः ?–उद्यमपरः, पुनः क० ?–त्यक्तान्यव्यापारः, पुनः क०?–दयापरिणामे स्थितः–सदयहृदयः ॥३१॥ तथा पुनरपि प्रतिलेखनां केन क्रमेण करोतीत्याह–अंगप्रतिलेखनां लघुवन्दनयुगलेन–छोभावन्दनयुग्मेन संदेशापयित्वा अंगप्रतिलेखनां विधाय स्थापनाचार्यं प्रतिलेखयति, तमेव स्थापनाचार्यं प्रतिलिख्य स्थाने स्थापयित्वा च पुनरुपधिमुखवस्त्रिकां प्रतिलेखयति ॥३२॥ तामुपधिमुखवस्त्रिकां प्रतिलिख्य पश्चात् किं करोतीत्याह—च पुनः छोभवंदनयुगलेन–लघुक्षमाश्रमणद्वयेन उपधिं संदेशापयित्वा पश्चादुपधिं प्रतिलेखयेत्, उत्तरार्द्धेनैकार्थानाह–छोभावन्दनलघुवन्दनादयः क्षमाश्रमणएकार्थाः ॥३३॥ इतः प्रभृति रात्रिविधेरनुक्रमः कथितः, ततः सूर्योदयात् किं विधेयमित्याशंक्याह–अथ रात्रिप्रतिक्रमणादिविधिकरणानन्तरं सूर्योदये वसतिं–शय्यां सुप्रमार्जयित्वा–सुतरां यतनया यतनापूर्वकं प्रमार्जयित्वा पुंजं–कचवरं चोद्धृत्य–उद्धरयित्वा परि–सामस्त्येन शोधयित्वा च षट्पदिकामक्षिकाकीटिकादि मृतप्राणिवर्गः तत्संख्यां च विधाय कचवरं छायायां–शीतलस्थाने परिष्ठाप्य पश्चादुपाश्रयाद् बहिः शतहस्तमात्रं शोधनीयं, तत्र नारीणां तिरश्चां च प्रसवमवबुद्ध्य अस्थ्यादिकं चोद्धृत्य पश्चादीर्यापथिकीं प्रतिक्रामति, पश्चात् स एव शिष्यः वसतिं प्रवेदयति, यथा गुरोः पुरस्तादिति, भणति–भगवन् वसतिं संदिसावुं ?, वसतिं पवेउं ? ॥३४॥ अथ प्रतिलेखनाप्रमार्जनयोः पदार्थनिरूपणं किमित्याशंक्याह—तत्र प्रतिलेखनां दृष्टिकृतां वदन्ति, ओघो रजोहरणादिभिः प्रमार्जनां वदन्ति, गीतार्था इति शेषः, यदाहुः—"चक्खुइ निरिक्खिज्जइ जं किर पडिलेहणा भवे एसा। रयहरणमाइएहिं पमज्जणं बिंति गीयत्था ॥१॥" तथा कालग्रहणे–कालग्रहणविशेषे ये योगवाहिनो मुनयस्ते पोतिकां प्रतिलिख्य च कृतिकर्म च कृत्वा वसतिं प्रवेदयित्वा पश्चात् कालप्रवेदनं कुर्वन्ति, उक्तं च–जे उण कालग्गाही ते पुत्तिं पेहिऊण किइकम्मं। काउं वसहिं तत्तो कालग्गहणं पवेयंति

॥१॥"॥५॥ काले प्रवेदिते पुनः को विधिर्विधेय इत्याशंक्याह—

**विहिणा वाणायरिओ सज्झायं पट्ठवेइ तह इयरे। अह उवओगो एसो आयारो सुत्तपोरिसीए ॥३६॥**

अथ तथा विधिना–आगमोक्तमार्गेण वाचनाचार्यो–व्रताधिकः स्वाध्यायं प्रथमं प्रस्थापयतीति, तथा पश्चादितरे–अन्ये सामान्यसाधवः स्वाध्यायं प्रस्थापयन्तीति शेषः, अथ स्वाध्यायानन्तरमुपयोगकरणं एष आचारः–क्रियाविशेषः सूत्रपौरुष्यां भवति, उक्तं च–"उवओगकरणकाले गीअत्था जं करंति सज्झायं। सो सुत्तपोरिसीए आयारो दंसिओ तेहिं॥१॥"॥३६॥ अथ स्वाध्यायसंबंधात् साधूनां सप्तमंडलीनियममाह—

**सुत्ते अत्थे भोअण काले आवस्सए य सज्झाए। संथारे चेव तहा सत्तेया मंडली जइणो ॥३७॥**

यतिनो–मुनेः सप्तैता मण्डल्यः–पंक्तयो भवन्ति, श्रेणीरूपा मंडली इत्यर्थः, कुत्र २ ?–प्रथमा मंडली सूत्रे–सूत्रवाचनायां १ द्वितीया अर्थे–आगमार्थग्रहणे २ सा त्वर्थपौरुष्यां भवति, तृतीया भोजने–अशने ३ चतुर्थी कालग्रहणे ४ पंचमी आवश्यके–प्रतिक्रमणे ५ षष्ठी स्वाध्याये–स्वाध्यायप्रस्थापने ६ सप्तमी संस्तारके चैव–शयनवेलायां ७, एता एव सप्त मंडल्यः, एतास्वेव मंडलीषु एकैकेनाचाम्लेन प्रवेष्टुं लभ्यते ॥३७॥ अथ पौरुषीणां विशेषमाह—

**पढमा छग्घडिया सुत्तपोरसी अत्थपोरसी बीया। बालाण दोऽवि सुत्तस्स गहियसुत्ताण अत्थस ॥३८॥**

अथ प्रथमा–आद्या षड्घटिकारूपा पादोनपौरुषी इत्यभिधाना सूत्रपौरुषी भवति, तस्माद् द्वितीया या पौरुषी सा अर्थपौरुषी भवति, अर्थो गृह्यते यस्यां सा०, तत्र बालानां–अनधीतशास्त्राणां लघुमुनीनां च द्वे अपि सूत्रपौरुष्यौ, गृहीतसूत्राणां च–अधी-

तागमानां द्वे अप्यर्थस्य-द्वे अर्थस्य पौरुष्यौ भवतः, यदाहु-"उस्सग्गेणं पढमा छग्घडिया सुत्तपोरिसी भणिया। बीया य अत्थ-विसया निद्दिठा दिठ्ठसमएहिं ॥१॥ विइयपयं बालाणं अगहियसुत्ताण दोऽवि सुत्तस्स। जे गहियसुत्तसारा तेसिं दो चेव अत्थ-स्स ॥२॥" ॥३८॥ तत्र पौरुष्यां साधवः किं कुर्वन्तीत्याशंक्याह—

अज्झयणं उज्झाओ करेइ जुत्तीइ वायणं देइ। आयरिया सुत्तत्थं कहइ इय पयट्टई नाणं ॥३९॥

तत्रोपाध्यायः-पाठकः अध्ययनं कारयति, कया?-युक्त्या, वाचनां दत्ते, नन्वाचार्याः सूत्रार्थं कथयन्ति, इति-अमुना प्रकारेण ज्ञानं-श्रुतज्ञानं प्रवर्तते, उक्तं च-"पुव्विं पढिंसु मुणिणो पुत्थयसत्थं विणावि सिद्धंतं। अज्झावइ उज्झाओ आयरिओ कहइ सुत्तत्थं ॥१॥ संपइ पुण सुत्तत्था गुरूण सीसाण पुत्थयाऽऽयत्ता। दीसंति दूसमाए अहवा किं किं न संभवइ? ॥२॥ उवविसइ उवज्झाओ सीसा वियरंति वंदणं तस्स। सो तेसि सव्वसुयं वायइ सामाइयप्पमुहं ॥३॥" ॥३९॥ तत्र गच्छे आचार्यादयः प्रधानीभूताः कियन्तो भवन्तीत्याशंक्याह—

आयरिय उवज्झाया पवित्ति थेरा तहेव गणवच्छा। एए पंच पहाणा जत्थ नरा हुंति सो गच्छो ॥४०॥

तथैते वक्ष्यमाणाः प्रधाना-प्रधानीभूताः यत्र गच्छे नराः-मनुष्याः भवन्ति-जायन्ते स गच्छः, एते के?-आदावाचार्यः १ तदनु उपाध्यायः २ तथा प्रवर्तकः ३ तथैव स्थविराः-वृद्धवयस्काः ४ तथा गणावच्छेदकः ५, तस्मात् किमायातं?, यत्रामी पंच न भवन्ति स गच्छो न, उक्तं च—सो किं गच्छो भन्नइ जत्थ न विज्जंति पंच वरपुरिसा?। आयरिय उवज्झाया पवित्ति थेरा गणावच्छा ॥१॥ तं कि भन्नइ गच्छं(रज्जं)जत्थ पहाणा न सन्ति पंच इमे। रायकुमारामच्चा सेणावइ खंडरक्खा य ॥२॥" यथा स्वयं

पंचविधाचारवन्तः अन्येषामपि तत्प्रकाशकत्वात् आचारसाधवः आचार्याः, यदाहुः—“पंचविहं आयारं आयरमाणा तहा पहासंता। आयारं दंसंता आयरिया तेण वुच्चंति ॥१॥” तथा उपाध्यायः, उपेत्य—समीपमागत्य यत्सकाशादधीयते इत्युपाध्यायः, यदाहुः—“बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहेहिं। तं उवइसंति जम्हा उज्झाया तेण वुच्चंति ॥२॥” प्रवर्तयति संयमयोगेषु प्रवर्तकः, यदाहुः—“तवसंयमजोगेसुं जो जोग्गो तत्थ तं पवत्तेई। असहुं च नियत्तेई गणतत्तिल्लो पवत्ती उ ॥३॥” तथा स्थिरकरणात् स्थविरः, यदाहुः—“थिरकरणा पुण थेरो पवत्तिवावारिएसु अत्थेसु। जो जत्थ सीयइ जई संतबलो तं थिरं कुणइ ॥४॥” गणावच्छेदको—रत्नाधिकः, यथा—“उद्धावणापहावणखित्तोवहिमग्गणासु अविसाई। सुत्तत्थतदुभयविऊ गणवच्छो एरिसो होइ ॥५॥” ॥४०॥ यस्मिन् गच्छे अमी आचार्यादयः पंच भवन्ति तत्र किं किं भवतीत्याशंक्याह—

**गच्छे अत्थं सुत्तं तवपमुहं जत्थ चेव य थिरत्तं। खित्तोवहिगहणाई सूरिप्पमुहा पसाहंति ॥४१॥**

गच्छे आचार्यादिपंचप्रधानपुरुषोपेते अर्थ—वृत्तिग्रन्थरूपं सूत्रं—वाचनामात्रं तपः—अनशनादि द्वादशविधं तत्प्रमुखं तथा चैव स्थिरत्वं—निश्चलीकरणं क्षेत्रोपधिग्रहणादिकं च सूरिप्रमुखा—आचार्यादयः पंच साधयन्ति—कथयन्ति ॥४१॥ तत्र केचिन्मुनयो द्वाविंशतिपरीषहेभ्यो भग्नाः किं कुर्वन्तीत्याह—

**केऽवि तहा मंदमई काउस्सग्गाइ आसणं झाणं। आयावणाइ कट्ठं कुव्वंति परीसहा भग्गा ॥४२॥**

केऽपि मन्दमतयो—हीनबुद्धयः, साधव इति शेषः, तथा—तेन प्रकारेण कायोत्सर्गादि—प्रलंबितभुजद्वन्द्वक्रियादि, तथा आसनं—उपवेशनं ध्यानं—चिन्तनं आतापनादि कष्टं च कुर्वन्ति—विदधति, कथंभूताः—परीषहेभ्यो भग्नाः द्वाविंशतिपरीसहेभ्यः उद्विग्नाः

॥४२॥ ते चागमप्रतीताः कति परीषहा एवेति विचार्य गाथायुगलेनाह—

**खुहा पिवासा सीउण्हं, दंसाऽचेला रइत्थीओ। चरिया निसीहिया सिज्जा, अक्कोस वह जायणा ॥४३॥**

**अलाभ रोग तणफासा, मल सक्कार परीसहा। पन्ना अन्नाण संमत्तं, इय बावीसं परीसहा ॥४४॥**

तत्र चाशेषपरीषहाणां क्षुत्परीषह एव दुःसहः, उक्तं च "पंथसमा नत्थि जरा, दारिद्दसमो पराभवो नत्थि। मरणसमं नत्थि भयं खुहासमा वेयणा नत्थि ॥ १ ॥" इत्यादि, अतस्तमाह आदौ, क्षुत्परीसहो, ग्रन्थान्तरे त्वादौ दिगिंछाशब्देन देशीयभाषया बुभुक्षैवोच्यते, सैवात्यन्तव्याकुलताहेतुरपि संयमभीरुतया आहारपाकेषु प्रासुकान्नमेषणीयं, अस्य परीषह इति कथं संज्ञा ?, भुक्तिवांछानिवर्तनेन परि—समंतात् सह्यते इति क्षुत्परीषहः १ तथा पिपासा—तृष्णा सैव परीषहः पिपासापरीषहः २ तथा शीतं—शीतस्पर्शपरीषहः ३ उष्णं—निदाघादितापात्मकं स एव परीषहः ४ तथा दंशमशकाः प्रतीताः, यूकाद्युपलक्षणं चैते ५ अचेलं—चेलाभावो जिनकल्पिकादीनां, अन्येषां त्वन्यथैव, भिन्नं अल्पमूल्यं चेलमपि अचेलम् ६ रतिः—संयमविषयाधृतिः तद्विपरीता त्वरतिः ७ तथा स्त्री—रामा तस्या एव तद्गतं रागहेतुविभ्रमेंगिताकारविलोकनेऽपि तदभिलापविनिवर्तनेन परीसह्यमाणत्वात् ८ चर्या ग्रामानुग्रामविहरणात्मिका ९ नैषेधिकी—श्मशानादिका स्वाध्यायभूमिः १० शय्या—उपाश्रयः संस्तारको वा तौ समविषमौ प्राप्य नोद्विजते ११ आक्रोशः—असभ्यभाषणात्मकः १२ वधो—लकुटादिभिस्ताडनम् १३ याञ्चा—प्रार्थना धर्मोपकरणादिरूपा १४ अलाभः—अभिलषितविषयाप्राप्तिः १५ रोगः—कुष्ठादिरूपः १६ तृणस्पर्शो—दर्भकंटकादिस्पर्शः १७ मलो—जल्लः १८ सत्कारो—वस्त्रादिभिः पूजनं,परस्मात् तद् लब्ध्वा नोत्कर्षं कुर्यात्, असत्कारितो वा न द्वेषं १९ प्रज्ञापरीषहः—स्वयं विमर्शपूर्वको वस्तुपरिच्छेदः २० अज्ञानं—प्रज्ञाया अभावः

प्रतिलेखनायन्त्रकम्

| | | | | | |
|---|---|---|---|---|---|
| आषाढ | | २ ० | ज्येष्ठ | प० | २ ऽ १० |
| श्रावण | प० | २ ऽ ४ | आषाढ | प० | २ ऽ ६ |
| भाद्रवउं | प० | २ ऽ ८ | श्रावण | प० | २ ऽ १० |
| आसो | प० | ३ | भाद्रवउं | प० | ३ ऽ ४ |
| कार्तिक | प० | ३ ऽ ४ | आसो | प० | ३ ऽ ८ |
| मार्ग० | प० | ३ ऽ ८ | कार्तिक | प० | ४ ऽ ० |
| पौष | प० | ४ ० | मार्ग० | प० | ४ ऽ ४ |
| माघ | प० | ३ ऽ ८ | पौष | प० | ४ ऽ १० |
| फागुण | प० | ३ ऽ ४ | माघ | प० | ४ ऽ ६ |
| चैत्र | प० | ३ ० | फागुन | प० | ४ ऽ ० |
| वैशाख | प० | २ ऽ ८ | चैत्र | प० | ३ ऽ ८ |
| ज्येष्ठ | प० | २ ऽ ४ | वैशाज | प० | ३ ऽ ४ |

२१. सम्यक्त्वपरीषहः—सम्यक्त्वं परिसह्यमाणं निश्चलचित्तेन धार्यमाणस्वरूपमिति २२। एते नामतो द्वाविंशतिः परीषहाः ॥ ४४ ॥ अप्राप्ते पौरुषीसमये सा कथं दृश्यते इत्याशंक्याह—

अर्थः तथा समये—काले प्राप्ते सूर्ये दक्षिणे श्रवणे—कर्णे कृत्वा—विधाय दक्षिणजानौ अंगुलीर्धृत्वा प्रतिलेखनासमयं जानीत, उक्तं च—"सूरं दाहिणसवणे दक्खणजाणुंमि अंगुलीं काउं। पढमपयंपि गणिज्जा तं जाण पडिलेहणासमयं ॥ १ ॥" ॥ ४५ ॥ अथ कस्मिन् मासे कतिभिः पद्भिः प्रतिलेखना भवतीत्याशंक्याह—

आसाढे मासे दुपया, पोसे मासे चउप्पया। चित्तासोएसु मासेसु, तिपया हवई पोरसी ॥४६॥

अंगुलं सत्तरत्तेणं, पक्खेणं तु दुरंगुलं। वड्ढए हायए वावि, मासेणं चउरंगुलं ॥४७॥

तथा आषाढ्यां पौर्णमास्यां द्वौ पादौ भवतः, पौष्यां पौर्णमास्यां चत्वारः पादाः, चैत्राश्विनयोर्मासयोस्त्रिपदा पौरुषी भवति ॥४६॥ अथ प्रतिमासं हानेर्वृद्धेः किं स्वरूपमित्याशंक्याह—आषाढपूर्णिमायाः आरभ्य सप्ताहोरात्रेणांगुलं वर्द्धते, पक्षेण त्वंगुलद्विकं वर्द्धते, अनया पूर्वोक्तयुक्त्यैवांगुलद्विकं हीयते वर्धते च, तथा मासेन—पक्षद्वयरूपेण चतुरंगुलं वर्द्धते हीयते च, इयं व्यवहारपौरुषी ॥४७॥ एष पश्चिमप्रहरप्रतिलेखनान्यासः, अतः प्रातः पौरुषीनिर्णयं कर्तुमाशंकते—

जिट्ठामूलेआसाढसावणे छहिं अंगुलेहिं पडिलेहा। अट्ठहिं बीअतिअंमि अ ततिए दस अट्ठहिं चउत्थे ॥४८॥

मूले आदौ ज्येष्ठ आषाढे श्रावणे च मासे षड्भिरंगुलैः प्रतिलेखना भवति, यथा या पूर्वं ज्येष्ठे आषाढे श्रावणे च त्रिके तृतीयप्रहरे प्रतिलेखना कथिता तत्र षट् २ अंगुलप्रक्षेपः कर्तव्यः, तथा द्वितीयत्रिके—भाद्रपदआसोकार्तिकरूपे तृतीयप्रहरप्रतिलेखनायां अंगुलाष्टकच्छायाप्रक्षेपः, तथा तृतीये त्रिके—मार्गशीर्षपौषमाघरूपे अंगुलदशच्छाया साधिकतया पौरुषी भणिता, चतुर्थे त्रिके—फाल्गुनचैत्रवैशाखरूपे अंगुलाष्टकच्छायावृद्धिः, असावागमप्रणीतः प्रान्तप्रतिलेखनाविधिः ॥४८॥ तथा ज्येष्ठामूलमत्र सूत्रे किमर्थं निश्चितं इत्याशंक्याह—

वइसाहपुण्णिमाए समणंतरपडिवयाइ जो दियहो। तं चिय जिट्ठामूलं छक्को पक्खेवओ तत्थ ॥४९॥

वैशाखपूर्णिमायाः पश्चाद् या प्रतिपत् सा ज्येष्ठामूलसंज्ञा तस्मिन्नेव ज्येष्ठामूले आदौ षड् प्रक्षेपः कर्तव्यः—षडंगुलप्रक्षेपो विधेयः, अग्रेऽपि यथासूत्रं सर्वत्र बोद्धव्यम् ॥४९॥ अथ पूर्णिमायां २ षट्कादिप्रक्षेपः कथं स्वीकृत इत्याशंक्याह—

तेदि-
र्या

देवाण महरिसीणवि समप्पए पुण्णिमाइ खलु मासो। आसाढपुण्णिमाए दुन्नि पया तेण नायव्वा ॥५०॥

तथा देवानां—भवनपतिव्यन्तरज्योतिष्कवैमानिकरूपाणां तथा महर्षीणां च पूर्णिमायां खलु—निश्चितं मासः समर्प्यते—गच्छति तेन हेतुना आषाढपूर्णिमायां द्वौ पादौ ज्ञातव्यौ, तथा सूत्रेऽपि मासभेदाः पंचोदाहृताः, यदाहुः—"मासा य पंच सुत्ते नक्खत्तो १ चंदिओ य २ रिउमासो ३। आइच्चोऽविय अवरो ४ अभिवड्ढियओ य ५ पंचमओ ॥१॥ अर्थश्च—नक्षत्रे भवो नाक्षत्रः, कोऽर्थः?, चन्द्रश्चारं चरन् यावता कालेनाभिजिदारभ्योत्तराषाढान्तर्गच्छति तावन्नाक्षत्रमासः, यद्वा चन्द्रस्य नक्षत्रमंडले परिवर्तनतो निष्पन्नः इत्युपचारतो मासोऽपि नक्षत्रम् १, तथा चान्द्रो मासः, चन्द्रसंभवः चान्द्रो, युगादौ श्रावणे मासि कृष्णप्रतिपदारभ्य पौर्णमास्यन्तश्चान्द्रो मासः, यद्वा चन्द्रचारनिष्पन्नत्वादुपचारतो मासोऽपि चन्द्रः २ तथा ऋतुमासः, ऋतुः—लोकरूढ्या पष्ट्यहोरात्रमानो मासद्वयात्मकः, तस्यार्द्धमप्यवयवे समुदायोपचारात् त्रिंशदहोरात्रप्रमाणो ऋतुमासः ३ आदित्यस्यायमादित्यः, स च एकस्य दक्षिणायनस्य उत्तरायणस्य वा अशीत्यधिकदिनशतप्रमाणस्य षष्ठभागमानः, यद्वा आदित्यचारनिष्पन्नत्वात् उपचारतो मासोऽप्यादित्यः४, तथा पंचमोऽभिवर्द्धितो मासः, अभिवर्धितस्तु मुख्यतस्त्रयोदशचन्द्रमासमानः संवत्सरः, एकेन मासेन अभिवर्धितत्वात्, परं तद्द्वादशभागप्रमाणो मासोऽप्यवयवे समुदायोपचारात् अभिवर्धितः ५, एते च नक्षत्रादयः पंच मासाः, अतो वृत्तिकारः पंचमासानां यथासंख्यं दिनसंख्यां गाथाव्याख्ययाऽऽह—अहरत्त सत्तवीसं तिसत्तसतसट्ठिभाग नक्खत्तो १। चंदो अउणत्तीसं विसट्ठिभागा उ बत्तीसं ॥१॥ उउमासो तीसदिणो आइच्चो तीस होइ अद्धं च। अभिवड्ढिओ अ मासो चउवीससएण छेएण ॥२॥ भागाणिगवीससयं तीसा एगाहिया दिणाणं च। एए जह निप्फत्तिं लहंति समयाउ तह नेयं ॥३॥ नाक्षत्रो मासः सप्तविंशत्यहोरात्राः एकस्य

| २ ७ |
|---|
| २ १ |
| ६ ७ |

चाहोरात्रस्य त्रिसप्तसप्तषष्टिभागाः, एकविंशतिरित्यर्थः, न्यासः, तथा चन्द्रमास एकोनत्रिंशदहोरात्राः द्वाषष्टिभागस्याहोरात्रस्य द्वात्रिंशत्, ऋतुमासः पूर्णानि त्रिंशदिति न्यासः ३०, तथा आदित्यमासे त्रिंशदहोरात्रा भवन्ति अर्द्धं चाहोरात्रस्य, न्यासः, तथा अभिवर्धितमासे दिनानां एकाधिकत्रिशत्–एकत्रिंशदहोरात्राः एकस्य चाहोरात्रस्य

| २९ |
|---|
| ३२ |
| ६२ |

| ३ ० |
|---|
| ३ ० |
| ६ ० |

चतुर्विंशत्युत्तररूपेण छेदेन–भागेन विभक्तस्य एकोनविशत्यधिकं शतं भागानां भवति, एते पंच मासा यथा निष्पत्तिं लभन्ते तथा समयादवसेयम्। उक्तं च रत्नमालायां–"दर्शावधिं मासमुशन्ति चान्द्रं, सौरं तथा भास्करराशिचारात्। त्रिंशद्दिनं सावनसंज्ञमार्या, नाक्षत्रमिन्दोर्भगणभ्रमाच्च ॥१॥" ॥५०॥

| ३ १ |
|---|
| १ २ १ |
| १ २ ४ |

यथागमं पौरुषीस्वरूपमवगम्य प्राप्ते काले तां कथं भणति तदाह—

**पढमपयंपि गणिज्जा तत्तो नमिऊण भणइ गीअत्थो। भयवं बहुपडिपुन्ना संजाया पोरसी पढमा ॥५१॥**

तत्र पौरुषीछायामिननसमये प्रमाणकरणवेलायां प्रथमपादमपि गणयेत्, तद्गुणयित्वा ततोऽनन्तरं नमस्कृत्य–लघुवन्दनं दत्त्वा गीतार्थः–सूत्रवान् बहुप्रतिपूर्णा प्रथमा पौरुषी संजातेत्युच्चैःस्वरेण भणति, उक्तं च–"गीयं भन्नइ सुत्तं अत्थो पुण होइ तस्स वक्खाणं। गीएण य अत्थेण य जुत्तो सो होइ गीयत्थो ॥१॥" तथा 'सल्लुद्धरणनिमित्तं गीअत्थन्नेसणा उ उक्कोसा। जोयणसयाइं सत्त उ बारस वासा उ कायव्वा ॥२॥ ॥५१॥ इति गीतार्थभणित्यनन्तर गुरवः किं कुर्वन्तीत्याशंक्याह—

**उट्ठिन्ति तओ गुरुणो मुणिणोऽवि य छोभवंदणं दाउं। पुत्तिं पेहिंति तओ पत्ताई मत्त उवविट्ठा ॥५२॥**

तत उत्तिष्ठंति–ऊर्ध्वीभवन्ति गुरवः, मुनयोऽपि छोभवंदनं दत्त्वा मुखवस्त्रिकां प्रतिलेखयंति, ततः पश्चात् पात्रादीनि मात्रकं

**पडला पुण घणमसिणा गिम्हाइसु ति चऊ जहण्णेणं। पोत्तिव्व पडलगुच्छाइ पेहे पणवीसठाणेहिं ॥५४॥**

पडलानि पुनर्घनानि—दृढानि मसृणानि भवन्तीति शेषः, तथा पंच चत्वारि जघन्यादीनि जायन्ते, अयमर्थः व्याख्यातपूर्व एव, तत एव स्पष्टो बोद्धव्यः, उत्तरार्द्धेन पात्रादीनां प्रतिलेखनाविधिमाह—तत्र पोतिकेव—मुखपोतिकेव पडलानि गुच्छकादीनि च पंचविंशतिभिः स्थानैः—पंचविंशतिप्रतिलेखनाप्रकारैः प्रतिलेखयेत्, उक्तं च—"मुह वत्थे तह देहे गुच्छे पडलाइएसु पत्तेयं। पणवीसा पणवीसा ठाणा भणिया जिणिंदेहिं ॥१॥ चक्खुनिरिक्खणमेगं पुरिमा छच्चेव पुव्व कायव्वा। अक्खोडा पक्खोडा नव नव पणवीस वत्थंमि ॥२॥ भुअसिरि मुहहियए तिय २ चउ पुट्ठि छ पय पणवीसा। सिरपुट्ठिहिययवज्जा तणु पनरस ठाण इत्थीणं ॥३॥ इति प्रतिलेखनाविधिः। अथ पात्रकविशेषविधिश्चायं—आगंतुग संमुच्छिम हरितणुपमुहाण जाणणट्ठाए। पढमं करेइ दिट्ठिं नासापमुहेहिं उवओगं ॥१॥ मुहणंतएण गुच्छं गुच्छंगलयंगुलीहिं पडलाहिं। भूमीओ चउरंगुल पत्तमपत्तं च पेहिज्जा ॥२॥ गुच्छगपडलग तह पत्तकेसरि पत्तबंध पत्ताई। रयताण पत्तठावण पडिलेहा पत्तनिज्जोगो ॥ ३ ॥ वारस बाहिं ठाणा वारस ठाणाइं हुंति मज्झंमि। पत्तपडिलेहणाए पणवीसइमो करप्फंसो ॥४॥ पत्ताणं पडिलेहा संमं जम्मंतरंमि तह विहिया। जह वक्कलचीरिजई जाईसरणं समणुपत्तो ॥५॥ किं इह चिट्ठइ सप्पो जं इत्तियमित्तयंमि पडिलेहा। इय जंपंतो सासणदेवीए सासिओ खमओ ॥६॥ पडिलेहणा सकाले देइ फलं किसिबलाइकम्मुव्व। उवओगं तं काले पढिज्जसु लग्गसमयव्व ॥७॥ कालंमि कीरमाणं किसिकम्मं बहुफलं जहा होइ। इय साहियावि किरिया नियनियकालंमि बोद्धव्वा ॥८॥ पुढवी आऊकाओ तेऊ वाऊ वणस्सइतसाणं। पडिलेहणापमत्तो छण्हंपि विराहओ भणिओ ॥९॥ पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा। पच्चक्खाणं वा देइ वाएइ सयं पडि-

ज्झइ वा ॥१०॥५४॥ अथ विधिना कृतप्रतिलेखनानन्तरं साधुः किं करोतीत्याशंक्याह—

**इय काले कयपेहो अत्थं गिण्हिज्ज बीयपोरिसीए। अक्खठवणाइविहिणा गुरूवि सुद्धं परूवेइ ॥५५॥**

इति—पूर्वोक्तप्रकारेण काले—पौरुषीसमये कृतप्रतिलेखनो—विहितप्रतिलेखनाविधिः द्वितीयपौरुष्यां—अर्थपौरुष्यां अर्थं गृह्णीयात्, आगमार्थवाचनां गुरुरपि विधिना—कृतिकर्मादिना शुद्धां प्ररूपयति, उत्सूत्रं न पाठयतीत्यर्थः, कथं यथा स्यात् ?, अक्षस्थापनादिपूर्वं यथा स्यात् तथा, यदाहुः—"अक्खे वराडए वा कट्ठे पुत्थे०"इत्यादि ॥५५॥ सूत्रवाचनायाः किं फलमित्याशंक्याह—

**ओसन्नोऽवि विहारी कम्मं सोहेइ सुलभबोही य। चरणकरणं विसुद्धं उववूहंतो परूवंतो ॥५६॥**

विहारी साधुः—विहारकरणशीलः साधुः अवसन्नोऽपि—प्रमाद्यपि अष्टविधं कर्म शोधयति—निराकरोति, तथा विहारे लाभोऽपि गरीयान्, उक्तं च—"समणाणं सउणाणं भमरकुलाणं च गोकुलाणं च। अणिययाउ वसहीउ सारइयाणं च मेहाणं ॥ १ ॥ दंसणसोही थिरभावभावणा अइसयत्थकुसलत्तं। जणवयपरिक्खणावि य अणीयवसहीगुणा हुंति ॥२॥" अथाविहारपक्षे के दोषाः ?, उक्तं च—"पडिबंधो लहुयत्तं अजणुवयारो अदेसकुसलत्तं। नाणाईण अवुड्डी दोसा अविहारपक्खंमि ॥१॥" अथ विहारोद्यतेन साधुना किं चिन्त्यं ?, तदाह—तिहिकरणंमि पसत्थे नक्खत्ते अहव सयस्स अणुकूले। घित्तूण निंति वसहा अक्खे सउणे परिक्खंता ॥१॥ ते शकुना एव के ?, उक्तं च—"जंबू चास मयूरे भारद्दाए तहेव नउले य। दंसणमेसि पसत्थं पयाहिणे सव्वसंपत्ती ॥१॥ नंदी तूरं संपुन्नदंसणं संखपडहसद्दो अ। भिंगारछत्तचामर एवमाई पसत्थाणि ॥ २ ॥ समणं संजयं दंतं, सुमणं मोअगा दहिं। मीणं घंटा पडागं च, सिद्धमत्थं वियागरे ॥३॥" अतोऽप्रशस्तशकुनाः—मइलकुचेले अब्भिंग इत्थीए साण खुज्ज वडभे य। एए य अप्पसत्था,

हवंति खेत्ताउ निंताणं ॥१॥ नारी पीवरगब्भा वड्डकुमारी य कट्ठभारो अ। कासायवत्थ कुंतंधरा य कज्जं न साहंति ॥२॥ चक्कयरंमि भमाडो भुक्खऽहिमारो य पंडरंगंमि। तच्चन्नि रुहिरपडणं बोहिय दिट्ठे धुवं मरणं॥३॥ तथा विहर्तुमुद्यतः साधुः सुलभबोधिश्च भवति, किं कुर्वन्?–विशुद्धं–निर्मलं चरणकरणं–चरणकरणसप्ततिकारूपं चारित्रमुपबृंहयन् प्ररूपयंश्च, यदाहुः–"वय ५ समण ४ धम्म १ संजम १७ वेयावच्चं च १० बंभगुत्तीओ ९। नाणाइतियं ३ तव १२ कोहनिग्गहाई ४ चरण ७० मेयं॥१॥" अथ करणसप्ततिका "पिंडविसोही ४ समिई ५ भावण १२ पडिमा य १२ इन्दियनिरोहो ५। पडिलेहण ५ गुत्तीओ ३ अभिग्गहा चेव ४ करणं ७० तु ॥१॥" अनयोर्विवरणमागमाद् बोद्धव्यं, तथा 'अवसन्ने'ति कोऽर्थः?–अवसीदतीति क्रियाशैथिल्यात् मोक्षमार्गे श्रान्त इव अवसन्नः, उक्तं च–"ओसन्नोऽविय दुविहो सव्वे देसे य तत्थ सव्वंमि। उउबद्धपीढफलगो ठवियगभोई य नायव्वो ॥१॥ आवस्सयसज्झाए पडिलेणझाणभिक्खअभत्तट्ठे। आगमणे निग्गमणे ठाणे य निसीयणतुयट्टे ॥२॥ आवस्सयाइयाइं न करइ अहवावि हीणमहियाइं। गुरुवयणबला य तहा भणिओ एसो उ ओसन्नो ॥३॥ ॥५६॥" अथ वाचनाश्रवणे विशेषफलं किमित्याशंक्याह—

वक्खाणं निसुणंता अगहियधम्मावि तित्तियं कालं। हुंती आरंभविरया किं पुण गिण्हंति जे धम्मं? ॥५७॥

तथा व्याख्यानं शृण्वंतः–सूत्रार्थश्रवणं धारयंतः प्राणिनस्तावन्मात्रकालं विरता भवन्ति–पापव्यापाररहिता जायन्ते, कथंभूताः?–अगृहीतधर्मा अपि, न गृहीतः–न स्वीकारितो धर्मो यैस्ते, धर्मांगीकार विनापि, किं पुनर्भण्यते ये पुनर्धर्मं गृहूणन्ति–अंगीकुर्वन्ति, तेषामत्र का कथा?, उक्तं च–"जे अगहियधम्माविहु जत्तियकालं सुणंति वक्खाणं। नियमा छज्जीवदया तेहिं कया तित्तियं कालं ॥१॥ जे उण सम्मत्तं वा गिहत्थधम्मं च समणधम्मं वा। गिण्हन्ति देसणाए परमत्थो तेहिं पडिवन्नो ॥२॥"५७॥ तथा वर्षा-

दिषु यतीनां किमासनं कल्पनीयमित्याशंक्याह—

**पाउंछणमुडुबद्धे वासासमयंमि पीढफलगाई। आसणमिणं जईणं भूमी फलिहाणि सयणंमि ॥५८॥**

यतीनामृतुबद्धे काले पादप्रोंछनकं, तत्र पादप्रोछनकं रजोहरणमुच्यते, यदाहुः—"उन्नियं उट्टियं वावि, कंबलं पायपुंछणं। तिपरियल्लमाणसुद्धं, रयहरणं धारए इक्कं ॥१॥" तत्र वर्षासमये च पीठपट्टकादि इदमासनं ग्रहीतव्यं, शयनीये—संस्तारके भूमिफलिहकादीनि, भूमिः प्रतीता फलिहकं—एककाष्ठनिष्पन्नं संस्तारकाश्रयं, तदभावे वंशादिखंडं दवरकबद्धमपि करोति, परं यदि पक्षान्ते दवरकमुत्सार्य प्रतिलेखयति तदा तमपि कुर्यादित्यर्थः ॥५८॥ अथानुयोगे आरब्धे साधुः किं किं न कुर्यात् तदाह—

**अणुओगे आढविए पच्चक्खाणंपि नेव कारवए। जावं न पडिक्कमई इइपुन्ना बीयपोरसिया ॥५९॥**

अनुयोगे प्रारब्धे प्रत्याख्यानमपि नैव कारयति, अपिशब्दात् कथां च, यावत् तत् प्रतिक्रामति—परिपूर्णतां यावन्न गच्छति तावत् किमपि न करोति, इति—पूर्वोक्तप्रकारेण द्वितीया पौरुष्यपि परिपूर्णा भवति, उक्तं च—"आरंभिय अणुओगं पच्चक्खाणं न दिज्जए जत्थ। अन्नस्स तत्थ वत्तामित्तस्सवि नाम का वत्ता ? ॥१॥" ॥५९॥ द्वितीया पौरुषी कथं भवतीत्याशंक्याह—

**छायापएहिं मुणिसंजुएहिं नंदट्ठबाहुधुवयंमि। लद्धं नयणविहूणं दलीकयं दिवसगयसेसं ॥६०॥**

छायापदैः—शरीरछायाचरणैः मुनिसंयुक्तैः—सप्तसहितैः नंदाष्टबाहुध्रुवांकैः २८९ 'अंकानां वामतो गति'रिति श्रीधराचार्यैः तथा एतस्मिन्नंकेन भाजिते यल्लब्धं—यत् प्राप्तं तन्नयनविहूनं—उभयहीनं पश्चाद् दलीकृतं—अर्द्धीकृतं, अर्धे कृते सति यत् स्थितं तद्दिनमानं, यदि प्रहरद्वयादर्वाक् तदा तावन्मात्रं दिनं गतं, यदि प्रहरद्वयादूर्ध्वं तदा तावन्मात्रं दिनं शेषं, तथाहि—छायापादाः

लहाणी आसाढे निट्ठिया सव्वे ॥१॥ अर्थो यंत्रादवसेयः ॥६१॥ तथा साधुः प्रतिदिनं चैत्यानि कथं नमस्करोति तदाह—

**वंदिज्ज चेइयाइं सव्वभुवणे विसेसओ सव्वे। अट्ठमिचउद्दसीसु सेसदिणे चेइयं इक्कं ॥६२॥**

भुवनेषु—प्रासादेषु चैत्यानि—प्रतिमालक्षणानि वन्दयेत्, साधुरित्यध्याहारः, विशेषतोऽष्टमीचतुर्दशीषु सर्वेषु भवनेषु सर्वाणि चैत्यानि वन्दयेत्, शेषदिने—पर्वरहिते दिने एकं चैत्यं वन्दयेत्, तानि तु चैत्यानि आगमे पंचधा प्रोक्तानि, यदाहुः—"भत्ती १ मंगल २ चेइय निस्सानिस्सकडचेइए ४ नावि। सासयचेइय पंचम ५ मुवइट्ठं जिणवरिंदेहिं ॥१॥" यथा—गिहि जिणपडिमा भत्ती चेइयं १ उत्तरंगघडियंमि। जिणबिंबे मंगलचेइयं तु समयन्नुणो बिंति २ ॥२॥ निस्सकडं जं गच्छस्स संतियं ३ तदियरं अनिस्सकडं ४। सिद्धाययणं च इमं ५ चेइयपणगं विनिद्दिट्ठं ॥२॥" अथवा 'नीयाइं सुरलोए भत्तिकयाइं च भरहमाईहिं। निस्सानिस्सकयाइं मंगलकयमुत्तरंगंमि ॥१॥ वारत्तस्स य पुत्तो पडिमं कासीय चेइए रम्मे। तत्थ य थले अहेसी साहंमीचेइयं तं तु ॥१॥ अत्रेयं कथा—वारत्तपुरं पुरं अभयसेनो राजा वारत्तको मंत्री, तद्गेहे धर्मघोषमुनिर्भिक्षां ग्रहीतुं जगाम, तद्भार्या घृतखंडयुतं पात्रमुत्पाटितवती, बिन्दुः पपात, छर्दितदोष इति निर्गतो मुनिः, मत्तवारणस्थो मंत्री किमेवंविधापि भिक्षा मुनिना न गृहीतेति यावत् चिन्तयति तावत् तत्र बिन्दौ मक्षिकाः पेतुः, तद्भक्षणाय गृहगोधिका, तस्या अपि सरटः, तस्यापि मार्जारी, तस्या उपरि श्वा, तदुपरि तत्र वास्तव्यः श्वा, तत्कृते स्वामिनोऽभूल्लकुटालकुटि, तद् दृष्ट्वा मंत्री चिन्तयामास—अहो सुदृष्टो धर्मः साधूनामप्येष एव, त्रयाणामितिवैराग्याज्जातिस्मरणमुत्पन्नं, ततो देवतार्पितलिंगश्चिरं संयममनुपाल्य समुत्पन्नकेवलः सिद्धः, तत्पुत्रेण स्नेहात् चैत्यं कारयित्वा रजोहरणमुखवस्त्रिकासहिता पितृप्रतिमा तत्र स्थापिता, तत्र शाला च प्रवर्तिता, तत्र स्थलीति अभूत्, तत्र साधर्मिकचैत्यमभूत्

मध्यमचैत्यवन्दनादयो भेदाः, उत्कृष्टा—विधिपूर्वकशक्रस्तवपंचकनिर्मिता, यद्वा उत्कृष्टा तु शक्रस्तवादिपंचदंडकनिर्मिता जयवीयरायेत्यादिप्रणिधानांता चैत्यवंदना स्यात्, अन्ये तु शक्रस्तवपंचकयुतामाहुः, तत्र वारद्वयं चैत्यवंदना प्रवेशत्रयं निष्क्रमणद्वयं चेति पंच शक्रस्तवाः ॥६४॥ अथ चैत्यवन्दनानन्तरं साधोर्गोचरचर्याकालः कथमित्याह—

**खित्तंमि जत्थ जो खलु गोअरचरियाए वट्टए कालो। तं साहिज्जसु पोरसिजुअलं पुण तयणुसारेण ॥६५॥**

यस्मिन् क्षेत्रे—यत्र ग्रामादौ यः कालः अशनादिग्रहणलक्षणः खलु—निश्चितं गोचरचर्याया वर्तते तं कालं साधुः साधयेत्, तदनुसारेण पुनः—तस्य कालानुसारेण पोरसीयुगलं—सूत्रार्थलक्षणं विधेयम्, यदाहुः—"कालेण निक्खमे भिक्खू, कालेण य पडिक्कमे। अकालं च विवज्जित्ता, काले कालं समायरे ॥ १ ॥ अकाले चरसि भिक्खू, कालं न पडिलेहसि। अप्पाणं च किलामेसि, सन्निवेसं च गरिहसि ॥२॥ सइ काले चरे भिक्खू, कुज्जा पुरिसकारियं। अलाभुत्ति न सोइज्जा, तवुत्ति अहियासए ॥३॥"६५॥ अथ गोचरचर्याकाले ज्ञाते साधुना किं किं विधेयमित्याशंक्याह—

**भिक्खासमए पुत्तिं पेहिय ठाणंमि ठविय पत्ताइं। आवसियाइ भणित्ता गोअरिआए विणिक्खमइ ॥६६॥**

भिक्षासमये—आहारग्रहणसमये लघुवंदनकपूर्वं मुखवस्त्रिकां प्रतिलिख्य पुनः क्षमाश्रमणं दत्त्वा भणति—भगवन्! पात्रकाणि स्थाने स्थापयामि?, ततः पात्रकादि सुप्रमार्ज्य आवश्यकीं भणित्वा गोचरचर्यां निष्क्रामति—निःसरति, उक्तं च—"पत्ते भिक्खासमये पणमिय पडिलेहिऊण मुहपोत्तिं। नमिऊण भणइ भयवं! ठाणे ठावेमि पत्ताणि ॥१॥ पडिलेहिय सुपमज्जिय तत्तो पत्ताणि पडलजुत्ताणि। उग्गहिउं गुरुपुरओ उवओगं कुणइ संघाडो ॥२॥ एगाणियस्स दोसा इत्थी साणे तहेव पडणीए। भिक्खऽविसोहि

महव्वयं तम्हा सबिइज्जए गमणं ॥३॥ आवस्सियं भणिंत्ता गुरुणा भणियंमि तहय उवउंत्तो। सिरिगोअमं सरित्ता सणियं उक्खिवियं तो दंडं ॥४॥ वाहवहनाडियायं पढमं उप्पाडिऊण वच्चिज्जा। धरणियलं नो दंडं धरिज्ज जा लब्भए भिक्खं ॥५॥" ॥६६॥
अथ पात्रकाणि करे विधाय निःसरन् किं वदति तद् गाथायुगलेनाह—

**उसभस्स य पारणए इक्खुरसो आसि लोगनाहस्स। सेसाण य परमन्नं अमियरसरसोवमं आसि ॥६७॥**
**अक्खीणमहाणसिलद्धिसंजुओ जयउ गोअमो भयवं। जस्स पसाएणऽज्जवि साहुणो सुन्थिया भरहे ॥६८॥**

तत्र साधुराहारार्थं गच्छन्नेतत् गाथाद्वयं पठति—उसभस्स—ऋषभस्य लोकनाथस्य भुवनगुरोः पारणके—तपसो द्वितीयदिने इक्षुरस आसीत्—अभवत्, शेषाणां तीर्थकृताममृतरसरसोपमं परमान्नं—पायसं आसीत् ॥६७॥ तथा गौतमोऽपि भगवान् गणभृत् जयतु, कथंभूतः?—अक्षीणमहानसीलब्धिसंयुक्तः यस्य गौतमस्य प्रसादेनाद्यापि—वर्तमानकालं यावत् सुसाधवः—चारित्रिणः भरते—भरतक्षेत्रे सुस्थिताः समाधिभाजो वर्तन्ते ॥६८॥ तथेदं गाथायुगलं भणित्वा साधुः कथं विचरति तदाह—

**इय भणिउं उवउत्तो अदीणवयणो पसन्नमणदिट्ठी। उंछवित्तीइ विहरइ इच्छाकाराइजयणाए ॥२६॥**

इति—पूर्वोक्तं प्रथमप्रणीतं गाथायुगलं भणित्वा उद्युक्तः—आलस्यरहितोऽदीनवदनो—विकसितवदनः तथा प्रसन्नमनोदृष्टिः, प्रसन्नं—निर्मलं मनः—चित्तं दृष्टिर्यस्यासौ, उंछवृत्त्या—स्तोकादानव्यापारेण विचरन् अशनादि गृह्णाति, यदाहुः—"जहा दुमस्स पुप्फेसु, भमरो आवियइ रसं। न य पुप्फं किलामेइ, सो अ पीणेइ अप्पयं ॥१॥ इत्याद्यत्र द्रुमपुष्पिकाध्ययनं बोद्धव्यं, ग्रन्थगौरवभयान्न लिख्यते, तत्राशनग्रहणे गौचरचर्यायामष्टौ वीययः—अष्टौ मार्गाः, यदाहुः—"उज्जू गंतुं १ पच्चागई य २ गोमुत्तिया ३ पयंग-

विही ४। पेडा य ५ अद्धपेडा ६ अब्भंतर ७ बाहिसंबुका ८॥१। ठाणाउ उज्जुगइए भिक्खंतो वलइ अनडंतो पढमाए १ बीयाए एमेव य पविसइ निस्सरइ भिक्खंतो २॥१॥ वामाउ दाहिणगिहे भिक्खिज्जइ दाहिणाउ वाममि। जीए सा गोमुत्ती ३ अद्दवियद्दा पयंगविही ४ ॥२॥ चउदिसि सेणीभमणे मज्झे मुक्कंमि भन्नए पेडा ५। दिसिदुगसेणीसंबद्धभिक्खणे अद्धपेडत्ति ६ ॥४॥ अब्भंतरसंबुका जीए भमिरो बहि विणिस्सरइ ७। बहिसंबुका भन्नइ एयविवरीयभिक्खाए ८॥५॥ तथा च पंचाशकवृत्तौ-शंबूकः-शंखः तद्वत् वृत्ततागमनं, तच्च द्विधा-प्रदक्षिणतः अप्रदक्षिणतश्च, इह प्रत्यागतिकायां रथ्याप्रक्षेपात् शंबूकायामेकत्वविवक्षणाच्च षडेव वीथयो ग्रन्थान्तरे। तथा पुनः कथं विचरति?-इच्छाकारादियतनया-इच्छाकारपूर्वं यतनया विचरति ॥६९॥ अथात्रेच्छाकारादियतना का इति वितर्क्याह—

इच्छा १ मिच्छ २ तहक्कारो ३ आवसिया ४ य निसीहिया ५। आपुच्छणा ६ वि पडिपुच्छा
७ छंदणा य ८ निमंतणा ९ ॥ उवसंपया १० य काले, सामायारी भवे दसहा ॥७०॥

षट्पदीछंदः, संप्रति इच्छाकारसंबंधाद्दशधा सामाचारी, तत्रादौ इच्छाकारेण ममेदं कृत्यं कुरु १ यदाहुः-"जइ अब्भत्थेज्ज परं कारणजाए करिज्ज से कोई। तत्थ य इच्छाकारो न कप्पइ बलाभिओगो अ ॥१॥ अर्थश्च-साधुना स्वकार्यार्थं निष्कारणं परो नाभ्यर्थनीयो, यदि तु कारणे-ग्लानादौ परमभ्यर्थयते-इच्छाकारेण ममेदं कुर्विति, यद्वा से-तस्य कुर्वतः किंचित् कश्चिन्निर्जरार्थी ब्रूते, यथा कार्यमहं विधास्ये तत्रापीच्छाकारो, न बलात्कारः १, अथ मिथ्याकाररूपा द्वितीया सामाचारी, यदाहुः-संजमजोए अब्भुट्ठियस्स जं किंचि वितहमायरियं। मिच्छा एयंति वियाणिऊण मिच्छत्ति कायव्वं ॥२॥ अथ तृतीया तथाकारसामाचारी, यदाहुः-कप्पा-

कप्पे परिनिट्ठियस्स ठाणेसु पंचसु ठियस्स । संजमतवड्ढगस्स उ अविगप्पेणं तहागारो ॥ ३ ॥ अर्थश्च–कल्पाकल्पे परिनिष्ठितस्य, कल्पः–आचारस्तद्विपरीतोऽकल्पः, यद्वा जिनकल्पादीनां कल्पः चरकसुगतादीनां अकल्पः,तस्मिन् परिनिष्ठितस्य–ज्ञाननिष्ठां प्राप्तस्य, साधवस्तिष्ठन्ति येषु तानि स्थानानि–महाव्रतानि तेषु स्थितस्य, संयमतपोभ्यामाढ्यस्य गुरोर्निर्विकल्पं वाचनादौ निश्चयेन तथाकारः, तदुक्ते तथेति भणनम् ३ तथा चतुर्थी आवश्यकीसामाचारी ४ पंचमी नैषेधिकीसामाचारी ५ यदाहुः–"आवस्सिया विहेया अवस्सगंतव्वकारणे मुणिणा । तंमि निस्सीहिया जत्थ सेज्जाठाणाइ आयरई ॥१॥ अर्थश्च–मुनेः–साधोः अवश्यगंतव्ये कारणे–निश्चितगंतव्ये निमित्ते ज्ञानाद्यर्थगमने आवश्यकी विधेया ४ यत्र शय्यास्थानं शय्या–वसतिस्तस्याः स्थानं प्रस्तावात् प्रवेशरूपं, आदेश्चैत्यादौ प्रवेशने, नैषेधिकीं कुर्यादिति भावः ५ अथ षष्ठी आपृच्छा ६ सप्तमी प्रतिपृच्छा ७ अष्टमी छंदना ८ नवमी निमंत्रणा ९, यदाहुः–'आपुच्छणा उ कज्जे पुव्वनिसिद्धेण होइ पडिपुच्छा। पुव्वगहिएण छंदण ८ निमंतणा तो अगहिएणं ९ ॥१॥ अर्थश्च कार्ये सति गुरोरापृच्छा कार्या, प्रभो! इदमहं करोमीति ६ गुरुणा पूर्वं निषेधितेनावश्यंकार्यत्वात् प्रतिपृच्छा, यद्वा पूर्वं निरूपितेन करणकाले पुनः पृच्छा प्रतिपृच्छा ७ पूर्वगृहीतेन अशनादिना साधूनां छंदनं–आह्वानं गृह्णन्त्वेतदिति ८ अगृहीतेन तु निमंत्रणा ९, यत्तवेदमिदं वा योग्यमानयामीति, उवसंपया उ तिविहा नाणे तह दंसणे चरित्ते य। एसा हु दसपयारा सामायारी तहऽन्ना य ॥१॥ अर्थश्च–उपसंपद् ज्ञानाद्यर्थमन्यगुरोर्निश्राश्रयणं, सा तु त्रेधा–ज्ञान १ दर्शन २ चारित्र ३ रूपा, एतदर्थं युष्मानहमाश्रितः, एषा तु निश्चितं दशप्रकारा सामाचारी, अन्याप्यस्ति, यदाहुः–पडिलेहणा १ पमज्जण २ भिक्खे ३ रिय४ऽऽलोअ ५ भुंजणा चेव ६। पत्तगधुवण ७ वियारा ८ थंडिल ९ आवस्सयाईया १० ॥ १ ॥ अर्थश्च–अन्या निशीथोक्ता दशधा सामाचारी, तत्र प्रातःप्रभृति

क्रमशः प्रतिलेखनोपधेः १ ततः प्रमार्जनं वसतेः २ ततोऽपि भिक्षाचर्या ३ आगतैरीर्या प्रतिक्रम्या ४ आलोचनं कार्यं गृहादीनां ५ असुरसुरमिति भोक्तव्यं ६ कल्पत्रयेण पात्रकाणां धावनं कार्यं ७ विचारः-संज्ञोत्सर्गार्थं बहिर्यानं ८ स्थंडिलानि द्वादश द्वादश त्रीणि च एवं सप्तविंशतिः २७, ९ आवश्यकं-प्रतिक्रमणं कार्यं १०, एषा चक्रवालनामिका दशधा सामाचार्यन्या ॥७०॥ तथा दशधा सामाचारीं प्रतिदिनं २ पालयन् साधुः कथमवतिष्ठते इत्याशंक्याह—

**तह वट्टमाणजोगं भविस्सकज्जे परंमि नियजोगं। वोसिरणं भाकज्जे अणुजाणिज्जा य भासिज्जा ॥७१॥**

अर्थः-तथा भविष्यत्कार्ये परस्मिन्-अन्यस्मिन् वर्तमानयोगमनुज्ञापयेत्-वर्तमानयोगमिति भणयेत्, तथा निजयोगं-आत्मसंयोगं, अकार्यविषये व्युत्सर्गं परित्यज्य पश्चादनुज्ञापयेत् भाषयेद्वा ॥ तथा प्रतिदिनं पुनरप्यात्मानं कथं स्थापयतीत्याह—

**हिययकरवत्तियाए समजलभरियाइ पावमलछिन्नं। अप्पं मिच्छाउक्कडचुलुएण खणं खणं सोहे ॥७२॥**

अर्थः-तथा हृदयकरपत्रिकायां, चर्ममयं जलपात्रं करपत्रिकेत्युच्यते, सा चेह हृदयरूपैव, तस्यां शमजलभरितायां-उपशमनीरपूरितायां आत्मानं पापमलच्छन्नं-पापकश्मलव्याप्तं मिथ्येति चुलुकेन क्षणे २-समये २ शोधयेद्, आत्मानं निर्मलं कुर्यादित्यर्थः ॥७२॥ तथा पूर्वोक्तयुक्त्या पुनरपि साधुः किं करोतीत्याह—

**इय वयणामयरससायभावियप्पा सयावि गीयत्थो। जहजुत्तसमायारो गिण्हइ पिंडं विगयदोसं ॥७३॥**

इति-पूर्वोक्तेन प्रथमप्रणीतेन वचनामृतरसास्वादभावितात्मा सदापि-निरंतरमपि 'गीतार्थः' गीतं-सूत्रं अर्थः-तस्य व्याख्यानं तद्वित् सूत्रार्थवित् यथायुक्तसमाचारो-यथोक्तक्रियासहितो विगतदोषं-द्विचत्वारिंशद्दोषरहितं पिंडं-अशनादिकं गृह्णाति-आदत्ते

प्रभवः जन्मेति पर्यायाः ॥७४॥७५॥ अथोत्पादनादोषाः षोडश, नामतः संख्यातश्च तान् गाथायुगलेनाह—

धाई १ दूई २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा य ६ ।
कोहे ७ माणे ८ माया ९ लोभे य १० हवंति दस एए ॥ ७६ ॥
पुव्विं पच्छा संथव ११ विज्जा १२ मंते य १३ चुन्न १४ जोगे य १५
उप्पायणाइ दोसा सोलसमे मूलकम्मे य १६ ॥ ७७ ॥

तत्रादौ धात्रीदोषः, धयन्ति—पिबन्ति तामिति धात्री, सा तु बालानां, तस्याः कर्म धात्रीकर्म करोति कारयति च १ द्वितीयं दूतीकर्म, परस्परं संदिष्टार्थाभिधायिका स्त्री दूती तत्करणात् २ तथा तृतीयं निमित्तं-अतीताद्यर्थसूचनं ३ चतुर्थं आजीवनं, आजीवो-जात्यादीनां गृहस्थात्मसमानानामभिधानतः उपजीवनं ४ पंचमं वनीपकं—अभीष्टजनप्रशंसनं ५ षष्ठं चिकित्सा—रोगप्रतीकारः, चः समुच्चये ६, तथा क्रोधः—कोपः ७ मानो—गर्वः ८ माया—वंचना ९ लोभो—लुब्धता १० चः समुच्चये, भवन्ति—जायन्ते दशैते—अनन्तरोक्ताः उत्पादनादोषाः इति योगः ॥७६॥ तथा एकादशं पूर्वपश्चात्संस्तवोद्भवं दानात् प्राक् पश्चाच्च दातुः श्लाघादि ११ तथा द्वादशं विद्या देवताधिष्ठिता ससाधना च १२ त्रयोदशं मंत्रप्रयोगः मंत्रो-देवाधिष्ठितो असाधनो वा अक्षररचनाविशेषः, चः समुच्चये १३ तथा चतुर्दशं चूर्णः, चूर्णो—नयनांजनरूपः अदृश्यीकरणं वा १४ पंचदशं योगः—सौभाग्यादिहेतुर्द्रव्यसंयोगः, चः समुच्चये १५ एते उत्पादनादोषाः—दूषणानि षोडश च पुनर्मूलकर्म—गर्भोत्पादादि वा इति गाथाद्वयार्थः ॥ यदाहुः—

इय वुत्ता सुत्ताओ बत्तीस गवेसणेसणादोसा । गहणेसणदोसे दस लेसेण भणामि ते अ इमे ॥७८॥

**अणिसिट्ठं बहुसंतियमेगेणं दिन्नमह्ऽज्झोयरओ। आयरियस्स नियट्ठा साहु निमित्तं उवरि पूरो ॥८६॥**

यत्र गृही–गृहस्थो यदा भक्तादि–चतुर्विधमशन १ पान २ खादिम ३ स्वादिम ४ रूपं, तत्राशनं शालितंडुलरूपादि १ पानं सौवीरतन्दुलधावनादि २ खादिमं–फलपुष्पादि ३ स्वादिमं–हरितकीशुंठ्यादि ४ साधोर्निमित्तं यतियोग्यं करोति–निष्पादयति तद् आधाकर्म, 'अथवा सचित्तस्य–अप्रासुकस्य अचित्तीकरणं–प्रासुककरणं वा–अथवा अचित्तस्य प्रासुकस्य प्रकटीकरणं तदप्याधाकर्म, अस्य चत्वारि नामानि, यथा आधाकर्म १ अधःकर्म २ आतमघ्नं ३ आतमकर्म चेति ४, एतेषामेतत्रयार्थः पिंडविशुद्धेरवसेयः, यदाहुः–'अट्ठवि कम्माइं अहे बंधइ' इत्यादि १। तथा च तत्सूत्रं–आहाकम्मंणं भुंजमाणे समणे निग्गंथे किं बंधइ किं पकरेइ किं चिणइ ?, गो०! आहाकम्मं भुंजमाणे आउअवज्जाओ सत्त कम्मपगडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ, हस्सकालठितीआओ दीहकालठितीआओ पकरेइ, मंदाणुभावाओ तिव्वाणुभावाओ पकरेइ, अप्पपएसग्गाओ बहुपएसग्गाओ पकरेइ, आउयं च णं कम्मं सिय बंधइ सिय नो बंधइ, असायावेयणिज्जं च णं कम्मं भुज्जो २ उवचिणइ" इत्यादि ॥८०॥ अथ द्वितीयमौद्देशिकाख्यमाह–तु पुनः तदौद्देशिकं यत्र कूरादि–ओदनादि दध्ना सार्धं साधुमुद्दिश्य उल्लवणं–पवित्रीकरण १, इदमौद्देशिकं त्रयोदशधा भवति २, अथ तृतीयं पूतीकर्म, अधःकर्मयुतं–सहितं पूति–अपवित्रं ३ अथ मिश्रं–आतमयोग्यं यतियोग्यं च कृतं ४ ॥८१॥ अथ पंचमं दूषणमाह–गृही यन्मुनियोग्यं पृथक् स्थापयति सा( स्थापना ५ ) एषा तु पुनः प्राभृतिका (प्रकरणस्योत्ष्वष्कणावष्वष्कणे) स्थापना प्राभृतिकेत्यर्थः ५ अथ षष्ठं (सप्तमं) प्रादुष्करणं, तद् द्विभेदं–प्रकटकरणं प्रकाशकरणं च, तत्र प्रकटकरणं साधूपयोगार्थं देयं वस्तु स्थितं निश्चलं द्रुतं शीघ्रं यत् प्रकटनं सांधकारगृहात् बहिस्तात् करणं अथवा चुल्लस्य प्रकटकरणम् ॥८२॥

अथ द्वितीयं प्रकाशकरणाख्यं निरूपयति—यत्र दीपादिना यद्वस्तुनो गवाक्षकुड्यच्छिद्रादिकरणेन प्रकटनं तत् प्रकाशकरणाख्यं, अस्योभयथापि प्रादुष्करणं नाम, यत् सतिमिरे गृहे—सान्धकारगृहे अचक्षुर्विषयभिक्षाया अग्रहणात् श्रमणार्थमशनादीनां प्रकटनमिति योगः७, अथ क्रीतमष्टमं, यत् देयवस्तुनः क्रयणं क्रीतेन—मूल्येन ८। अथ नवमं प्रामित्यं यत् यतियोग्यमुच्छिन्नं गृहीत्वा ददाति ९ ॥८२॥ अथ दशममाह—दशमं परावर्तितं यद् द्रव्यं दुर्गंधं घृतादि दत्त्वा सुगंधं घृतं गृहीत्वा ददाति वस्तुना—द्रव्येण घृतादिरूपेण वस्तु—घृतादिरूपं परावृत्त्य गृह्णाति तत् १०। अथैकादशमभ्याहृतं यद् गृहिणा स्वपरग्रामादेः आदिशब्दाद् देशपाटकगृहादेरपि (आनीय) मुनये यद्दीयते ११॥८३॥ अथ द्वादशं भणति—अथ द्वादशमुद्भिन्नं यत्र कुटादिषु—घृततैलभाजनेषु तैलादिदानार्थं छगणमृत्तिकादि विलिप्तं उद्भिद्य—उद्घाट्य ददाति तद् उद्भिन्नं १२। अथ त्रयोदशं मालापहृतं तत्र माले—मंचे गृहोपरितनभागे शिक्कादिषु च भूमिगृहादिषु वा कुंभीकोष्ठकादिषु च पार्ष्णिउत्पाटनात् अधोबाहुप्रसारणाच्च यद् दीयते तत् १३। अथ चतुर्दशमाच्छेद्य—उद्दाल्य भृत्यादिभ्यः सकाशात् बलादपि गृहीत्वा ददाति १४॥८५॥ अथ पंचदशं वक्ति—पंचदशं अनिसृष्टं स्यात् यत्र बहुसंतिकं—अनेकसत्कं बहूनां वस्तु बहुभिरदत्तमननुमतं वा तेषां मध्यादेकेन दत्तं तत्, यदाहुः—"दुण्हं तु भुंजमाणाणं, एगो तत्थ निमंतए। दिज्जमाणं न इच्छिज्जा, जं तत्थेसणियं भवे ॥१॥" १५। अथ षोडशमध्यवपूरकाख्यं, यत्र यावदर्थिनो याचकाः साधवो मुनयो वा सतीर्थिकाश्च तदर्थं स्थाल्यामवतारयति प्रक्षिपति पश्चात् तत्, अयमर्थो—निजार्थं स्थाल्यां धान्यं प्रक्षिप्य पश्चात् साधुनिमित्तं तदुपरि क्षेपः १६ ॥८६॥ एते षोडशोद्गमदोषाः गृहस्थाश्रिता उक्ताः, संप्रति उत्पादनायाः षोडश दोषान् गाथापंचकेनाह—

धाइयदूइयकम्मं मुणी निमित्तं न कुणइ भिक्खट्ठा। आजीवी कुलसिप्पाइं परेसु अप्पा तहा कहितो ॥८७॥

विप्पाईणं भत्तेसु तस्सरिसं पयडंतु जं गिण्हे। वणिमगपिंडो ओसहकरणेण तिगिच्छपिंडो उ ॥८८॥
कोहो तप्फलकहणं माणो सेहुव्व लद्धितुडिकरणं। मायाइ विविहवेसो लोभो भिक्खट्ठ बहुभमणं ॥८९॥
पुव्विं पियाइ ससुराइ पच्छिमं कुणइ सरिससंबंधं। जो सो संथवपिंडो विज्जाइपउंजणे पंच ॥९०॥
विज्जा जवाइसज्झा मंतो एमेव अंजणाइ पुण चुन्नं। जोगो लेवाइकम्मं मूलकम्मं तु रक्खाई ॥९१॥

यत्र मुनिः—साधुः धात्रीकर्म दूतीकर्म तृतीयं निमित्तं—निमित्तकरणं च यत्र भिक्षार्थं—आहारार्थं करोति तत्रैतद्दोषत्रयं स्यात्, तद्यथा—यत्र बालस्य धात्रीकर्माणि—धात्रीकार्याणि भिक्षुस्तनोति आत्मना परेण वा कारयति तानि धात्रीकर्माणि, तास्त्वागमे धात्र्यः पंचधा, यदाहुः—"बालस्स खीरमज्जणे"त्यादि, तत्र क्षीरधात्री १ मज्जनधात्री २ क्रीडोत्पाटनधात्री ३–४ अंकधात्री ५। अथ द्वितीयं दूतीकर्म, यत्रान्योऽन्यस्य संदिष्टार्थं गुप्तं वा निरूप्यते तत्, यदाहुः—"कहिय मिहो संदेसं पयडं छण्णं च सपरगामेसु। जं कहइ लिंगजीवी स दूइपिंडो अणत्थफलो ॥ १ । २, तृतीयं निमित्तं कर्म, यत्र भिक्षुर्भिक्षार्थमाहारवस्त्रपात्रादीनां लिप्सया निमित्तं—ज्ञानविशेषं लाभालाभं निरूपयति तत्, यदाहुः—"जो पिंडाइनिमित्तं कहइ निमित्तं तिकालविसयंपि। लाभालाभसुहासुह-जीवियमरणाइ सो पावो ॥१॥३ अथाजीवाख्यं चतुर्थं, यत्र यतिरात्मनः कुलं कथयंस्तथा परेषु शिल्पादि दर्शयन् पिंडं गृह्णाति तत्, यदाहुः—"जच्चाइधणाण पुरो तग्गुणमप्पंपि कहिय जं लहइ। सो जाइकुलगणकम्मसिप्पआजीवणापिंडो ॥१॥ ४, अथ पंचमं वनीपकाख्यं निरूपयति—विप्रादीनां भक्तेषु—ब्राह्मणादीनां वत्सलेषु जनेषु तत्सदृशं तद्भक्तं वाऽऽत्मानं प्रकटयन्—स्पष्टीकुर्वन् पिंडं गृह्णाति अभिलपति च तत्, यदाहुः—"पिंडट्ठा समणातिहिमाहणकिविणसुणगाइभत्ताणं। अप्पाणं तब्भत्त दसइ जं सो वणीमगुत्ति॥१॥

तत्र विप्राः–ब्राह्मणाः श्रमणाः निर्ग्रंथबौद्धतापसपरिव्राजकादयश्च ते पंच प्रोक्ताः, यदाहुः–“निग्गंथ १ सक्क २ तावस ३ गेरुअ ४ आजीव ५ पंचहा समणा। तंमि य निग्गंथा ते जे जिणसासणभवा मुणिणो ॥१॥ सक्का य सुगयसिस्सा जे जडिला ते उ तावसा गीया। जे धाउरत्तवत्था तिदंडिणो गेरुआ ते उ ॥२॥ जे गोसालगमयमणुसरंति भन्नंति ते उ आजीवा। समणत्तणं खु भवणे पंचविहं ता पसिद्धमिमं ॥३॥ ५ अथ षष्ठं चिकित्साख्यं आविष्करोति–असौ चिकित्सापिंडो भवति, असौ कः ?–यं पिंडं साधुरौषधकरणेन–भेषजविधानेन कथनेन वा लभते सः, तत्र सा चिकित्सा द्वेधा–सूक्ष्मा १ बादरा च २, यदाहुः–“भेसज्ज विज्जसूअण उवसमण वमणमाइकिरियं वा। आहारकारणेणवि दुविह तिगिच्छं कुणइ मूढो ॥१॥”६॥८७॥क्रोधादिपिंडस्वरूपं निरूपयति-क्रोधपिंडः क्रोधयोगात् पिंडोऽपि क्रोधः, यथा दंडयोगात पुरुषोऽपि दंडः, तर्हि क्रोधपिंडः, यदाहुः–विज्जातवप्पभावं निवाइधूअं बलं च से नाउं। दट्ठूणवि कोहफलं देति भया कोहपिंडो सो ॥१॥” तत्र क्रोधे घृतपूरोपलक्षितस्य क्षपकतपस्विनो निदर्शनं, तच्चेदं -हस्तकल्पे नगरे यतिरेको मासक्षपणपारणकदिने मृतकभक्तोत्सवे धिग्जातीयगृहं गतः, विप्रेभ्यो दीयमानेषु घृतपूरेषु चिरेणाप्यलब्धभिक्षः कोपादन्यस्मिन् दास्यति इत्युक्त्वा निर्गतो, दैववशात् तत्र द्वितीयं मानुषं विपन्नं, साधुरपि तथैव तन्मासिकेऽपि गतः, तथैव दृष्ट्वा तदेवोक्त्वा पुनश्चलितो यावत् तृतीयं मृतं, साधुरपि तथैवान्यस्मिन् दास्यतीति जल्पन् गतः, तृतीयवारं द्वारपालेन दृष्टः, तेन च गृहाधिपस्य निवेदितं, सोऽपि मरणभयात् साधुं क्षमयित्वा यथेच्छं घृतपूरैः प्रतिलाभितवानिति क्रोधपिंडः ७। अथ मानपिंडमाह–मानो–मानपिंडः, कोऽर्थः ?–मानेन उत्पादितः पिंडः मानपिंडः, स च शिष्यवत् लद्धितुडीकरणं लब्ध्याः स्पर्द्धीकरणं, यदाहुः–“लद्धिपसंसुत्तइओ परेण उच्छाहिओ अवमओ अ। गिहिणोऽभिमाणकारी जं मग्गइ-माणपिंडो सो ॥ १ ॥ अत्र माने

सेवतिकाभिरुपलक्षितस्य क्षुल्लकस्य निदर्शनं, तदिदं–कोशलादिदेशे गिरिपुष्पिते नगरे सेवतिकोत्सवे तरुणश्रमणादीनां संलापः, एकेनोक्तं–अद्य बह्व्योऽपि सेवतिका लभ्यन्ते, परं यः प्रातरप्यानयति स लब्धिमान्, अपरेणोक्तं–किं घृतगुडरहिताभिः स्तोकाभिश्च ?, तत एकः क्षुल्लकोऽवादीत्–अहमिदृशीस्ता आनेष्यामीति कृतप्रतिज्ञो द्वितीयदिने तदर्थी इभ्यगृहे तादृशीस्ता निरीक्ष्य तद्गृहिणीं विविधोक्तिभिः प्रार्थितामप्यददतीं साहंकारमाह–यथातथाऽप्यहमिमा गृहीष्ये, तयोक्तं–यद्येवं भवति तदा नासा घर्षणीया, क्षुल्लकोऽपि तत्पति सभासीनं कुतोऽपि ज्ञात्वा को भवतां देवदत्ताख्य इति अपृच्छत्, तैरुक्तः–किं तेन ?, सोऽप्याह–किंचित्तं याचिष्ये, तेऽप्यूचुः–शून्यगृहेषु सुकुमारिकां विलोकयति, तदपहासामर्षाद्देवदत्तः स्वयमाह–वद भो अहमस्मि, यदि तेषां षण्णां न सप्तमः तदा वच्मि, ते सर्वेऽपि सविस्मयमूचुः–के ते षट् ?, स आह–श्वेतांगुलि १ बकोड्डायी २, तीर्थस्नाता च ३ किंकरः ४। हदनो ५ गृध्रावरीपी ६, षडेते गृहिणीवशाः ॥ १ ॥ तत्राद्यः–एकः कुलपुत्रकः प्रियानिर्देशकारी प्रगेऽपि क्षुधार्तो याचित्तभोजनः शयनस्थया पत्न्या भणितो–यदि भोक्ष्यते तदा चुल्हीभस्मापनीय ज्वलनेन्धनाद्यानययेन शीघ्रं भोजयामि इति नित्यं तथा कुर्वन् चुल्हीभस्मापनयनात् जातश्वेतांगुलिर्लोकेन श्वेतांगुलिरुच्यते १। बगोड्डायी यथा कश्चित् प्रियाभक्तः पत्न्या भणितः–तडागात् प्रत्यहं त्वयैव जलमानेयं, ततः स तत् कुर्वन् दिने लज्जमानः अन्धकारे तडागं याति, बकाश्चोड्डीयन्ते, इति लोकेन बकोड्डायीत्युच्यते २। अथ तीर्थस्नातो यथा कश्चित् कान्तायत्तदेहो याचितस्नानः पत्न्योचे–गच्छ सामग्रीं गृहीत्वा तत्रैव सरित्तीरे स्नात्वा शीघ्रमागच्छेः इति, स तत्र स्नानकरणात् लोकेन तीर्थस्नात इत्युच्यते ३। अथ किंकरो, यथा एकः प्रियानुरागी प्रातरुत्थाय-प्रिये! किं करोमीत्याह, तया च पंडणापिषणजलाद्यानयनादेशानां करणं, तेषु किं करोमीति भणनात् लोकेन किंकर इत्युच्यते

वीक्षिता नटेन नटीस्तावत्पीतमद्याः, विसंस्थुलां स्वपन्तीं विलोक्य विषयविरक्तो निर्गच्छन्नसौ नटीभिस्ताभिर्याचितो जीवनोपायः, सप्ताहेन श्रीभरतचक्रिनाटकं नव्यमकरोत्, तच्च राज्ञे निवेद्य लब्धाभरणपात्रादिसमुदायः स्वयं भरतीभूय चक्रोत्पत्तिदिग्विजयराज्याभिषेकादिचरितं नाटितवान् यावदादर्शगृहं गतः, तत्र चांगुलीयकरत्नपातात् तथैव भरतभावनया लब्धकेवलालोको गृहीतद्रव्यलिंगो राजादीन् संबोध्य पात्रीकृतराजसुतपंचशत्याः प्रदत्तव्रतो भव्यो लोकमबोधयत्, एवं मोदकग्रहणात् स मायापिंडः ९। अथ लोभपिंडः, यत्र लोभेन–लम्पटतया भिक्षार्थं भिक्षाकुलेषु बहु–प्रभूतं भ्रमणं–अटनं सः, तत्र लोभे केसरकयतेरुदाहरणं, यथा चंपायां यतिरेको मासक्षमणपारणे उत्सवदिने सिंहकेसरकमोदकाभिग्रही विहरन् तदलाभात् संजातक्लिष्टाध्यवसायः केसरानेव ध्यायन् रजनीयामद्वयं बभ्राम, यावदेकेन श्रावकेण विज्ञाततद्भावेन प्रदत्तं मोदकं स्थालेन, भगवन्! पुरिमार्द्धो ममास्ति पूर्णो न वेति पृष्टः, स दत्तोपयोगो यावदूर्ध्वमीक्षते तावच्चन्द्रदर्शनादर्धरात्रं विज्ञाय लज्जितः सम्यग्बोधितोऽसीति श्रावकं जल्पन् नगरान्तेऽतिक्रम्य मोदकान् विधिना परिष्ठापयन् शुद्धाध्यवसायवशात् केवलालोकमाप, यदाहुः—"कोहे घेवरखवगो माणे सेवइयखुड्डगो नायं। मायाइ असाढभुई लोभे केसरीय साहुत्ति ॥१॥ १० ॥८९॥ अथ संस्तवदोषं निरूपयति–संस्तवपिंडः सः, कः?, यत्र पूर्वस्मिन्–आदौ दातारं दानात् पूर्वकाले संस्तवनं पूर्वसंस्तवः तथा पश्चाद्—उत्तरकाले दानानन्तरं संस्तवनं पश्चात्संस्तवः, पूर्वं पिताजननीभ्रातृभगिन्यादिपूर्वसंबंधात् पूर्वसंस्तवः, तथा श्वशुरकश्वश्रूकलत्रपुत्रादीनामात्मपरयोर्वयस्तारुण्यरूपाद्यवस्थासदृशीं–समानां निरूप्य ज्ञात्वा संबंधपूर्वकं स्तौति स पश्चात्संस्तवः, स च पुनर्मूलतो गुणस्तुतिरूपः संस्तवश्च, तथा विद्यादिप्रयोज्ये पंच दोषा भवन्ति॥ विद्यादयः पंच दोषास्त्वमी ॥९०॥ विद्या १ मंत्र २ अंजनं ३ चूर्णयोगः ४ रक्षादिश्च ५, तत्र देव्यधिष्ठिताक्षरपंक्तिर्विद्या जापहोमादि-

साध्या स्त्रीदेवता च, पिंडार्थं दोषा यस्यां तत् तथा, मंत्रो विद्याया विपर्ययलक्षणोऽसाधनः देवताधिष्ठितश्च, तस्यापि पिंडार्थकरणाद् दोषः, तथा अंजनादयः अन्तर्धानादिफलाः तिरोधानवशीकरणादिकार्यसाधकाः ३ तथा चूर्णानि–लोचनांजनभालतिलकादीनि तथा सौभाग्यदौर्भाग्यकराः श्रीचंदनधूपद्रव्यादिविशेषाः पादप्रलेपचरणलेपमुख्या योगाः स्युः, तथा तु पुनर्मूलकर्म रक्षादिमूलिकाभिः प्रसिद्धाभिः सौभाग्यार्थं रक्षाकरणमिदं मूलकर्म, एते विद्यादयः पंच दोषाः, यदाहुः–इय वुत्ता सुत्ताओ बत्तीस गवेसणेसणादोसा। गहणेसणदोसे दस लेसेण भणामि ते य इमे ॥१॥ ९१ ॥

**दोसा संकाइ संकिय मक्खियं महुदगाइसंसिट्ठं । तसथावरेसु ठवियं अचित्तमवि होइ निक्खित्तं ॥९२॥**

**पिहियं सचित्तथगियं साहरियं भायणट्ठियमजोगं । निक्खिविऊण सचित्ते वियरइ जं तेण पत्तेण॥९३॥**

**दायगयं जं दिन्नं निगडिय कंपंत पाउयठिएहिं । बालथविरंधपंडगमत्तकुणिखंजजरिएहिं ॥९४॥**

**खंडगपीसगलोढगपिंजगकत्तगविलोडगाईहिं । वेलामासवईए सबालवच्छाइ इत्थीए ॥९५॥**

**खंडाइकणाइजुयं उम्मिस्सं परिणयं न जं फासुं । महुमाइविलित्तेणं कराइणा देइ तं लित्तं ॥९६॥**

**छड्डुंतेण य दिन्नं छड्डियमिय हुंति दोस बायाला । गिहिजइउभयप्पभवा उग्गममाई तहा कमसो ॥९७॥**

अथ गवेषणाया दश दोषाः प्ररूप्यन्ते, दोषाणामाधाकर्मादीनां शंकायां पिंडग्रहणे शंकितग्रहणे शंकितं स्यात्, अस्य चत्वारो भंगाः, तद्यथा–शंकितग्रहणं शंकितभोगः १ अशंकितग्रहणं शंकितभोगः २ शंकितग्रहणमशंकितभोगः ३ निःशंकितग्रहणं निःशंकितभोगः४। अथ म्रक्षितं, म्रक्षितं द्वेधा–सचित्ताचित्तयोर्मधूकादिवस्तुनोर्योगात्, संसृष्टं सचित्तम्रक्षितं यत् करादि तत् म्रक्षितमि-

त्यर्थः, तथा त्रसस्थावरेषु स्थापितं समस्तमचित्तमपि–प्रासुकमपि निक्षिप्तं भवति तत्, तत्र त्रसा द्वीन्द्रियादयः स्थावरा एकेन्द्रियादयः तैर्युक्ते अचित्तेऽपि ॥९२॥ अथ पिहिताख्यं दूषणं निरूपयति, तत्र सचित्ताचित्ताभ्या स्थगितं–आच्छादितं, एतच्चतुर्भंगं, तद्यथा–सचित्तेन सचित्तं पिहितं १ अचित्तेन सचित्तं २ सचित्तेन अचित्तं ३ अचित्तेन अचित्तमिति ४, तत्र भंगत्रयमशुद्धं, चतुर्थे भंगे गुरुलघुरूपाश्चत्वारो भंगास्तेऽपि पिंडविशुद्धेर्ज्ञेयाः, ग्रन्थगौरवभयान्नेह लिखिताः, अथ संहृताख्यदोषमाह–तत् संहृताख्यं यत् पृथ्वीकायादौ भाजने अयोग्यं दानानुचितं मृत्तिकाजलतुषादि दातुमनभिप्रेतं वा करोटिकादेर्भाजनादपरेण रिक्तीकृतमात्रकेणैव ददाति–देयं वस्तु साधुभ्यो यच्छति, गृहस्थ इति शेषः॥९३॥ अथ दायकाख्यदूषणं गाथायुग्मेन निरूपयति, तत्र यदि दातुर्गतमेवंविधेन वक्ष्यमाणेन दत्तं तद्दायकाख्यमित्यर्थः, केन ?–निगडितादिना, निगडितो–लोहमयादिपादबंधनादितः कम्पमानांगः पादुकारूढः–काष्ठादिमयोपानचटितः तैः, तथा बालस्थविरांधपंडकमत्तकुब्जकखंजज्वरितैरपि, तद्यथा–बालोऽव्यक्तो वा पष्टिकान्तर्वर्ती, स्थविरो वृद्धः, स च सप्ततेर्वर्षाणामुपरि, अंधो दृष्टिरहितः, पंडगो नपुंसको, मत्तो मदिराविह्वलः, कूणिकः–कुब्जः, खंजः-चरणरहितः, ज्वरितो-रोगवान्, तैः ॥९४॥ तथा उदूखलमुशलाभ्यां या सचित्तं श्लक्ष्णयति खंडीकरोति तया दीयमानं न गृह्यते, तथा या च पिनष्टि-शिलायां तिललवणजीरकादि मृद्नाति, तथा लोढकः कर्पासलोडिन्या कणकेन निष्कुलं करोति, पिंजकः-रुतं पिंजनेन मृदुकरणपरः कर्तकः–पुणिकाभिः सूत्रकरणपरः, विलोडगाभिर्विलोडनं कराभ्यां पुनः पुनः रुतसूक्ष्मकरणमेभिरपि देयं न ग्राह्यं, तथा विलोडनं दध्यादिमथनं च तथा वेलामासवत्या कालः, रजस्वलाया इत्यर्थः, तथा च या स्त्री सबाला–स्तनोपजीविशिशुका तथा प्रस्तावात् गर्भिण्या अष्टमासकगर्भवत्याः, एभिर्दोषैः साधुना दातुः सकाशात् पिंडो न ग्राह्यः ॥९५॥ अथोन्मिश्राख्यं विवृणोति, अथ खंडाद्युचितं–योग्यं कणाद्यैः सचित्त-

असणाईया चउरो पाउंछण वत्थ पत्तकंबलया। सिज्जायरपिंडो उण न कप्पए रायपिंडव्व ॥९९॥

हणणं पयणं कयणं न कुणइ न य कारवेइ अन्नंपि। अणुजाणइ न कुणंतं एया नव हुंति कोडीउ ॥१००॥

सुविसुद्धाहारेणं साहूणं निच्चमेव उववासो। देसूणपुव्वकोडिंपि पालयंताण सामन्नं ॥१०१॥

अथ तत्र पिंडे नव कोटयो भवन्ति, तास्त्विमा वक्ष्यमाणाः, हननं वधः पचनं पाकः क्रीतं—मूल्यगृहीतं आत्मना न करोति अपरेण न कारयति अन्यं कुर्वन्तं नानुज्ञापयति, एकस्मिन् हनने त्रयः करणकारणानुमतिरूपाः, एवं पचने क्रीतेऽपि, मीलिताः नव कोटयो भवन्ति, यदाहुः—"एए पुव्वाभिहिया दोसा सव्वेवि नवसु कोडीसु। भेयप्पभेयजुत्ता संखेवेणं अवयरंति ॥ १ ॥" ॥९९–१००॥ निर्दोषपिंडग्रहणे साधूनां यो लाभस्तमाह—सुतरां—अतिशयेन विशुद्धो—निर्दोषः सुविशुद्धः एवंभूतो य आहारः प्राणाधारस्तेन साधूनां—महात्मनां नित्यमेव—सदैवोपवासः—अभक्तार्थः, कथंभूतानां साधूनां?—देशोनपूर्वकोटिं श्रामण्यं—चारित्रं साधुत्वं पालयतां ॥१०१॥ अथ पिंडाधिकारे पानकग्रहणविधिमाह—

गिण्हिज्ज आरनालं अंबिलधोअणतिदंडउक्कलियं। वन्नंतराइपत्तं फासुअसलिलंपि तदभावे ॥१०२॥

पिंडग्रहणसमये साधुरारनालं—अवश्रावणं गृह्णीयात् आंबिलं—कांजिकं तंदुलादिधावनं त्रिदंडोत्कलितमुष्णोदकं वर्णान्तरादि प्राप्तं अन्यत् प्रासुकजलमपि गृह्णीयादिति योगः, परं तदभावे—तस्योष्णोदकस्याप्राप्तौ, यदाहुः—उस्सेइम १ संसेइम २ तंदुल ३ तिल ४ तुस ५ जवोदगा ६ ऽऽयामं ७। सोवीरं ८ सुद्धवियडं ९ अंबड १० अंबाडय ११ कविठ्ठं १२ ॥ १ ॥ माउलिंग १३ दक्खा १४ दाडिम १५ खज्जुर १६ नालियर १७ कयर १८ बदरफलं १९। आमलयं २० चिंचापाणगाइं २१ पढमंगभणियाइं

आए एवमाईयं। उच्चारिऊण सुत्तं कयउस्सग्गो विचितेइ ॥ ९ ॥ अहो जिणेहिं असावज्जा, वित्ती साहूण देसिया। मोक्खसाहण-हेउस्स, साहुदेहस्स धारणा ॥१०॥ पारेइ नमुक्कारेण तयणु चउवीसजिणथवं भणइ। पच्चक्खाणं नियमं पुव्वकयं इत्थ पारेइ ॥११॥
अमुं पूर्वोक्तविधिं निष्पाद्य पुनः किं कुरुते तदाह—

**कयसज्झाओ य खणं वीसमिय निमंतिउं गिलाणाई। पोत्तिं पेहिय भणिउं नवकारं भुंजइ पयासे ॥१०४॥**

कृतस्वाध्यायो मुनिर्जघन्यतो गाथाषोडशकविहितस्वाध्यायः क्षणं–क्षणमात्रं विश्रम्य ग्लानादीन् निमंत्रयित्वा–आकार्य पोतिकां प्रतिलिख्य नमस्कारं च भणित्वा–नमस्कारमंत्रमुच्चार्य प्रकाशे–नांधकारे भोजनं करोति, साधुरिति शेषः, यदाहुः–“मुंचइ भत्तं पाणं सम्मं जिणणाहवंदणं कुणइ। सोलससिलोगमाणं जहन्नयं कुणइ सज्झायं ॥१॥ खणमित्तं वीसामं करेइ चिंते अणुग्गहं जइ मे। कुव्वंति गिलाणाई तत्तो हुज्जामि कयकिच्चो ॥२॥ जह अब्भंगणलेवो सगडक्खवणाण जुत्तीओ होइ। इय संजमभरवहणट्ठ-याए साहूणमाहारो ॥३॥ जे चेव अंधयारे दोसा ते चेव संकडमुहंमि। परसाडीबहुलेवाडणं च तम्हा पगासमुहे ॥४॥ ॥ १०४ ॥
अथ पिंडदोषाधिकारादिह द्विचत्वारिंशद्दोषाः निरूपिताः, शेषाः संयोजनादयो ग्रासैषणादोषाः पञ्च, यतेर्विधिना गृहीतस्याहारस्य विधिनैव ग्रासः कार्यः, अतस्ते निरूप्यन्ते—

**संजोयणा पमाणे इंगाले धूमऽकारणे चेव। भोयणदोसे पंच उ समयपसिद्धा इमे वज्जे ॥१०५॥**
**खंडाइ मंडगाइसु संजोयइ भुंजई पमाणऽहियं। संसंतो निंदंतो जिमइ य छक्कारणाभावे ॥१०६॥**

तत्र पंचसु ग्रासैषणादोषेषु आदौ संयोजनादोषः १ तथा प्रमाणं–प्रमाणातिक्रमरूपं स एव द्वितीयः २ तथा तृतीयः अंगारनामा

३ चतुर्थो धूमनामा ४ पंचमस्तु कारणनामा ५,एते पंच दोषाः समयप्रसिद्धाः—आगमनिरूपिताः तान् वर्जयेत् साधुरिति शेषः ॥१०५॥ तेषामेव पंचदोषाणां व्याख्यानं कुरुते, खंडादि मंडकरसगृद्धया गुणान्तरोत्पादनाय मंडादिषु संयोजयति—एकत्रीकरोति सा संयोजना, सा च द्विधा—उपधानविषया भक्तपानविषया च, पुनरेकैका द्विविधा—बाह्या अभ्यन्तरा च, तत्र उपकरणे बहिर्भव्यं चोलपट्टं लब्ध्वा भूषार्थं पटीं भव्यां याचयित्वा बहिरेव परिधत्ते सा बाह्या, वसतौ त्वभ्यन्तरा, तथा द्वितीया भक्तपानविषया, साऽपि द्वेधा—वसतेर्बहिरन्तश्च, यस्यां विशिष्टास्वादनिमित्तं दुग्धदध्योदनादीनां मीलनं सा बहिःसंयोजना, तथा भिक्षामटित्वाऽन्तर्भक्तपानसंयोजना पात्रे मंडकगुडघृतादि संयोज्य भक्षयतो द्वितीया, इह च रसहेतोरिति विशेषणेन कारणतः संयोजनायामपि न दोषः, यदाहुः—"रसहेउं संजोगो पडिसिद्धो कप्पए गिलाणट्ठा। जस्स व अभत्तछंदो असहोच्चियभाविओ जो य ॥ १ ॥ सुगमा, नवरं यस्याहारे अरुचिः तथा शुभाहारोचितो राजपुत्रादिश्च साधूचित्ताहारेणाभावितस्तस्य संयोजना अनुज्ञाता। अथ द्वितीयं प्रमाणं—यच्चागमे द्वात्रिंशत् कवलादिरूपं तेन हीनमधिकं वा भुंक्ते इत्यर्थः, तत्र पुरुषस्य सूत्रे कुकुट्यंडकमात्रकवलापेक्षमाहारमानं, यदाहुः—कुक्कुडिअंडयमित्ता कवला बत्तीस भोअणपमाणे। रागेणासायंतो संगारं करइ सचरित्तं ॥१॥ अर्थश्च कुकुटी द्रव्यभावभेदाद् द्विधा, तत्र द्रव्यतः कुक्कुटी—साधोः शरीरं तन्मुखं अंडकं तत्राक्षिकपोलादीनां विकृतिमनापाद्याहारः यद्वा कुक्कुटी—पक्षिणी अंडकं प्रमाणं कवलस्य अतो, भावकुक्कुटी तु यावन्मात्रेण न न्यूनं नाप्यधिकं चोदरं स्यात् ज्ञानादीनां च वृद्धिः स्यात् तावन्मात्रं भक्तमिति, तथा तस्य द्वात्रिंशत्तमो भागः अंडकं तन्मानः कवलः ४ यथा पुरुषस्य द्वात्रिंशत् कवलाः स्त्रियोऽष्टाविंशतिः नपुंसकस्य चतुर्विंशतिः, पुनरप्याहुः—बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥१॥ उत्तानार्थैव, अत्रो-

दरभागापेक्षं त्वेवं–'अद्धमसणस्स सव्वंजणस्स कुज्जा दवस्स दो भागे। वायपवियारणट्ठा छब्भागं ऊणगं कुज्जा ॥१॥ विहिगहियं विहिभुत्तं इयभंगं जिणवरेहिऽणुन्नायं। सेसा नाणुन्नाया गहणे दिंते य निज्जुहणा ॥२॥" तथा–'विदलं जिमिउं पच्छा पत्तं च मुहं च दोऽवि धोविज्जा। अहवा अन्नयपत्ते भुंजिज्जा गोरसं नियमा ॥१॥ किं च–अत्थि अणंता जीवा जेहिं न पत्तो तसाइपरिणामो। तेऽवि अणंताणंता निगोअवासं अणुहवंति ॥१॥ तत्र त्रसाः बादराः द्वीन्द्रियादयः, अन्यच्च–ये निगोदवासमनुभवन्ति तेऽप्यनंताऽसन्ति, तत्र केचन दुग्धदधितक्रादीनां मध्ये मुद्गादिद्विदलान्ने मिलिते कालान्तरेण त्रसजीवानामुत्पत्तिः एवं त्रिदिने दध्नि चलिते कुथितान्ने च, अत्र सर्वत्र सूक्ष्मत्रसजीवानामुत्पत्तिर्ज्ञानिभिर्दृष्टा, अथांगारधूमलक्षणं दोषद्वयं व्यनक्ति–यत्र माधुर्यमाहारदातारं वा शंसन् भुंक्ते तदिह प्रवचने अंगारोपमचरणेंधनकरणभावादंगारमिति कथ्यते, यच्चासुंदरमितिकृत्वा निन्दन् द्विष्टोऽभ्यवहरति तस्य धूमोपमचरणेन्धनकरणभावात् धूममिति, आह च—"तं होइ सइंगालं जं आहारेमुच्छिओ संतो। तं पुण होइ सधूमं जं आहारेइ निंदंतो ॥१॥ अथ षट्कारणाभावे भोजनं कुर्वतोऽकारणदोषं स्पष्टयति ॥१०६॥ अथ तानि षट् कारणानि कानीत्याशंक्याह—

वेयण वेयावच्चे इरियट्ठाए य संजमट्ठाए। तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥१०७॥

तत्र षण्णां कारणानां मध्ये आदौ वेदनाकारणं–क्षुद्वेदनोपशमनाय भुंक्ते, क्षुद्–बुभुक्षा तस्याः वेदना तद्रूपा वा वेदना क्षुद्वेदना तन्निवारणाय भुंजीत साधुः, यदाहुः–"णत्थि छुहाए सरिसा वियणा भुंजिज्ज तप्पसमणट्ठ"त्ति १। तथा वैयावृत्त्यं–आचार्यादिप्रतिचरणं तद्रक्षार्थं तद्धानिनिवारणार्थं भुंक्ते साधुः, आह च–छाओ वेयावच्चं न तरइ काउं अओ भुंजे' छाउत्ति स्फातो बुभुक्षितः,- तथा ईर्यार्थं ईर्याशुद्धये, अत्र ईर्यां ईर्यासमिति वा विशोधयितुं–निर्मलीकर्तुं भुंक्ते साधुः, बुभुक्षितो हि ध्यामललोचनस्तां

तथा कर्तुं न शक्नोति, तथा संयमार्थं—सप्तदशसंयमरक्षायै, तत्र संयमः—प्रत्युपेक्षणाप्रमार्जनादिलक्षणः साधुव्यापारः तत्पालनार्थं, बुभुक्षितोऽपि तं कर्तुं न शक्नोति, तथा प्राणवृत्त्यर्थं—दशप्राणवर्तनाय, अथवा प्राणस्य—जीवितस्य रक्षार्थं—परिपालननिमित्तं यतिर्भुंक्ते, षष्ठं पुनः कारणं धर्मचिंतार्थं—धर्मध्यानचिंतायै, धर्मस्य ध्यानं धर्मध्यानं, एतदपि बुभुक्षितः कर्तुं न शक्नोति ॥१०७॥ अथ साधुभोंजनं कुर्वन्नात्मानमेवं तर्जयतीत्याशंक्याह—

**बायालीसेसण संकडंमि गहणंमि जीव! न हु छलिओ। इण्हि जइ न छलिज्जसि भुंजंतो रागदोसेहिं॥१०८॥**

जीवति—प्राणिति दशभिः प्राणैः इति जीवः तदामंत्रणं भो जीव!, द्विचत्वारिंशद्दोषाणां गहने संकटे विषमस्थाने हि—निश्चितं न छलितोऽसि यदि चेदिदानीं—अधुना भुंजानः—आहारं कुर्वन् रागद्वेषाभ्यां न छलिष्यसि ॥१०८॥ तथा आहारं कथं कुरुते इत्याशंक्याह—

**असुरसुरं अचबचबं अदुअमविलंबियं अपडिसाडि। अविकियमुहो जिमित्ता पक्खालिय पियइ पत्तजलं ।१०९।**

साधुरनया युक्त्या सुप्रणीतया वक्ष्यमाणया आत्मानं प्रीणाति तर्पयति, यथा असुरसुर—सुरडकानकुर्वन् अचबचबं चबचबमकुर्वन् चर्वयति अदुअं—अद्रुतं अविलंबितं—अमंथरं अपरिशाटि—परिसाटनारहितं अविकियं—अविकृतं विकाररहितं मुखं मनो यस्य तादृक् वाकायगुप्तो भुंजीत, अथो भुक्त्वा—जिमयित्वा त्रिः पात्रं प्रक्षाल्य पात्रजलं पिबति, यदाहुः—"पत्ताणं पक्खालणसलिलं मुणिणो पियंति तिक्खुत्तो। सोहंति मुहं तत्तो सागरिए पत्तमुह धुवणं ॥१॥ जे मुणिणो विहिपुव्वं जेमंति सयावि सयलपत्ताणि। धोवणसलिलेण धुवं अवेंति दोसा असेसावि ॥२॥ तह परिसाडिविमुक्कं जिमंति जइणो जिइंदिया निच्चं। जह जिमियाजिमियाणं ठाणविसेसं न लक्खंति ॥३॥ ॥१०९॥ अथ पात्रक्षालनक्रमविधि विवृणोति—

**गुरुणो पत्तं भिन्नं कप्पिय आहागडं तु सेसेसुं। पढमं पक्खालिज्जइ जहाविसुद्धं तु सेसाणि ॥११०॥**

गुरोः पात्रकं–भोजनभाजनं भिन्नं–पृथक् कल्पयेत्–त्रेपयेत्, कल्पत्रयं कुर्यात्, शेषपात्रकेषु यथाक्रमं–क्रमस्यानुल्लंघनेन प्रक्षालयित्वा तु पुनः शेषाणि पात्रकाणि यथाविशुद्धं प्रक्षालयेत् ॥११०॥ अथोद्धरितस्याहारस्य को विधिरित्याह—

**जं गहियमणाभोगाइणा असुद्धं तहेव उव्वरियं। छारेणमक्कमित्ता परिट्ठवेउं उचियदेसे ॥१११॥**

अथ यदशनादि अनाभोगादिना–प्रमादादियोगेन अशुद्धं–सदूषणं गृहीतं तथैवोद्धरितं च तदशनं छारेण–रक्षापुंजेनाक्रमयित्वा-मर्दयित्वा परिष्ठापयेत्, क ?–उचितदेशे-प्राणिवार्जितप्रदेशे–आतपे वा, यदाहुः–"जं च असुद्धं गहियं संकियदव्वं विगिंचए थेरो। बालाइपरिट्ठवणे उड्डाहवहाइया दोसा ॥१॥" ॥१११॥ अथ कृताहारो मुनिः किं कुरुते इत्याशंक्याह—

**इरियपडिकमणसक्कत्थयपुत्तिवंदणयसंवरण पुव्विं। निम्मज्जिऊण पत्ते ठविज्ज पेहाइ जा समओ ॥११२॥**

तथा कृतभोजनो मुनिरादावीर्यां प्रतिक्रामति, तदनु शक्रस्तवं पठति, चैत्यवंदनां करोति इत्यर्थः, पश्चात्संवरणपूर्वं मुखवस्त्रिकां प्रतिलिख्य वंदनकं ददाति, तत्र च प्रत्याख्यानं करोति, ततोऽपि पात्रकाणि मार्जयित्वा–भाजनानि जलबिंदुरहितानि कृत्वा स्थापयेत् यावत् प्रतिलेखनासमयः–तृतीयप्रहरप्रतिलेखनाकालः स्यात्, यदाहुः–"विहिणा जेमिय उट्ठिय इरियं पडिक्कमिय भणइ सक्कथयं। पुत्तिं पेहिय वंदणमिह दाउं कुणइ संवरणं ॥१॥ सोहिय पत्ताबंधे सम्मं निम्मज्जियाणि पत्ताणि। बंधित्तु तेण ठाविज्ज होइ पडिलेहणं जाव ॥२॥ कहविहु पमायवसओ पत्ताबंधो खरंटिओ हुज्जा। पडलाणि अहव कप्पा कप्पिजसु ताणि जयणाए ॥३॥ पढमं लूहिज्जंते चीवरखंडेण जेण पत्ताणि। तं निच्चं धोविज्जसु अन्नह कुच्छाइया दोसा ॥४॥" ॥११२॥ अथैवं पात्रकाणि निधाय

बहिर्भूमिकृत्यं कुर्यात् तद्गाथाद्वयेनाह—

**अह बाहिरभूमीओ दिसाइ ईसाणजम्मवज्जाए। गंतूणमसंलोए जणस्स मत्तगनिहियनीरो ॥११३॥**
**पुट्ठिमदेंतो पुररविवायाणं थंडिलं च संडासे। पेहिय अणुजाणाविय उच्चाराई जई कुणइ। ११४॥**

अथानन्तरं कृतभोजनानन्तरं तृतीययामपौरुष्यन्तः बहिर्भूमिं गच्छति, तत्र–बहिर्भूमौ ईशानयमवर्जितायां दिशि गत्वा, ईशानविदिग्दक्षिणदिग्रहितां दिशं गत्वा, जनस्य–लोकस्यासंलोके–संमर्दरहिते मात्रके–तृप्तिकरे न्यस्तनीरः—प्रक्षिप्तजलो नगरसूर्यवातानां—पुरतपनपवनानां त्रयाणां पृष्ठिमददत् संडासेन सप्रकाशे स्थंडिलं प्रतिलेख्य दृष्टिप्रतिलेखनां विधाय क्षेत्रदेवतामनुज्ञापयित्वा च यतिः–साधुः उच्चारादि कुरुते, यतः सूत्रे–"वच्चमुत्तं न धारए" यदाहुः–"अह बाहिरभूमीए जलपत्ताणिं गहाय गच्छन्ति। आवस्सियं तु कुव्वं इरियासमिया अभासंता ॥१॥ विच्छिन्ने दूरमोगाढे, नासन्ने विलवज्जिए। तसपाणबीयरहिए, उच्चाराईणि वोसिरे ॥२॥ ॥११३॥ तथा वृत्तोच्चारादिकर्मणःपश्चात् साधुः किं करोति? तदाह—

**वोसिरिऊण तिखुत्तो वसहिं आगम्म कुणइ किच्चाइं। पच्छिमजामे पभणइ पत्तो पडिलेहणासमओ ॥११५॥**

ततः उच्चारादिकं विधाय पश्चात् वोसिरइ इति वारत्रयं भणित्वा पश्चाद्वसतिं–उपाश्रयं ईर्यासमितिविधिना आगत्य अपराणि धर्मकृत्यानि करोति, तत्रापि ईर्यापथिकी प्रतिक्रमितव्या, यदाहुः–गंतूण नगहिदारे पाय पमज्जिय निसीहियं काउं। इरियापडिकमणेणं गमणागमणाइ वियडंति ॥१॥ हत्थसयादागंतुं गंतु व मुहुत्तगं जहिं चिट्ठे। पंथे वा वट्टंते नइसंतरणे य पडिकमणं ॥२॥ कज्जस्स य २ समये २ करिज्जमाणस्स। जइ हुज्ज समयसेसं तो तत्थ करिज्ज सज्झायं ॥ ३ ॥" इति पूर्वोक्तस्वरूपां क्रियां कुर्वतः

साधोः पश्चिमयामे—प्रान्ते पश्चिमप्रहरे आगते भणति—कथयत्युच्चैःस्वरेण प्रतिलेखनासमयः प्राप्तः—तृतीयप्रहरप्रतिलेखनायाः कालः आगतः, यदाहुः—"पच्छिमजामं सेसं सम्मं जाणित्तु समयतत्तन्नू। वागर खमासमणा! पत्तो पडिलेहणासमओ ॥१॥॥ ११४॥
ततः प्रतिलेखनां कथं कुर्वन्ति तदाह—

पडिलेहणवसहिपमज्जणाउ दाऊण दो खमासमणे। पुत्तिं पेहिय दोहिं तणुपेहं संदिसावेइ ॥११६॥

(ईर्यां कृत्वा प्रतिलेखनावसतिप्रमार्जनयोः) तथेह क्षमाश्रमणद्वयं दत्त्वा पोतिकां मुखवस्त्रिकां—प्रतिलेखयित्वा तदनु पुनरपि द्वाभ्यां क्षमाश्रमणाभ्यां लघुवंदनरूपाभ्यां तदनु प्रतिलेखनामवगम्य प्रतिलेखनां संदेशापयति ॥११५॥ अथात्र प्रतिलेखनायां विशेषमाह—

उववासिय सव्वोवहिपज्जंते चोलपट्टगं पेहे। इयरो पढमं पट्टं रयहरणं सव्वओ पच्छा ॥११७॥

इह तृतीयप्रहरप्रतिलेखनासमये खु निश्चितं सर्वोऽपि—सकलोऽपि उपोषितः साधुवर्गः—कृताभक्तप्रत्याख्यानः पर्यन्ते—सकलोपधिपर्यन्ते चोलपट्टं—अधःपरिधानवस्त्रं प्रतिलेखयति, सर्वसाधुरिति शेषः, यदाहुः—"पभणंति खमासमणे गुरू तओ साहुणोवि पढमंमि। पडिलेहणं करेमो बीए वसहिं पमज्जेमो ॥१॥ पुत्तिं पट्टग गुच्छग केसरिया पत्तबंध पडलाई। रयताण पत्तठावण मत्तगपत्तं च पेहंति ॥१॥ ॥११६॥ ततोऽपि को विधिर्विधेयः तदाह—

वसहि पमज्जण ठवणागुरु उवहिं कट्टु पेहए पुत्तिं। कट्टु सज्झायमोही थंडिल्लं संदिसावेइ ॥११८॥

ततस्तदनन्तरं वसतेः—उपाश्रयस्य प्रमार्जनं तदनु स्थापनाचार्यप्रतिलेखनं तत उपधिमुखवस्त्रिकाप्रतिलेखनं, पश्चात् स्वाध्यायकरणं, स्वाध्यायादनु उवही थंडिलं संदेशापयति, यदाहुः—"तो वसहिं च पमज्जिय ठवणायरियं तहेव पेहित्ता। दाऊण खमा-

समणं पुत्तिं पेहिंति उवउत्तो ॥१॥ अह लहुयवंदणेणं सम्मं कुव्वन्ति तयणु सज्झायं। सुत्तत्थगाहिणो जे तेसिं सो चेव सज्झाओ ॥२॥ चत्तारि खमासमणा देइत्थं दो उ थंडिलाण पेहाए। दुन्नि य गोअरचरियापडिकमणे काउसग्गे य ॥ ३ ॥"११८॥ अथ कस्मिन् काले किं किं प्रतिलिख्यते तदाह—

**गोसे दसगं पेहे उग्घाडापोरिसीइ पत्ताई। सव्वं तु चरिमजामे पक्खाइसु तदभिहा एव ॥११९॥**

गोसे—प्रत्यूषे उपस्येव दश मुखवस्त्रिकारजोहरणप्रभृति प्रतिलेखयेत्, तथा उद्घाटपौरुष्यां पात्रादिकं—पात्रं पात्रबंध इत्यादि, प्रतिलेखयेत् तु—पुनश्चरमयामे—तृतीयप्रहरपौरुष्यां सर्वं—सर्वमपि प्रतिलेखयेत्, पक्षादिषु-पाक्षिकचातुर्मासिकसांवत्सरिकादिषु तदभिधा एव ॥११९॥ अथ पुनः प्रतिलेखनाया विशेषमाह—

**अह पत्ताणुवगरणं पडिलेहिय निक्खिवंति तो उवहिं। पेहिंति गुरुपरिन्ना गिलाण सेहाइ अप्पस्सा ॥१२०॥**

अथ पात्रकाणामुपकरणं—उपस्करं प्रतिलेखयित्वा ततः उपधिं निक्षिपन्ति, ततो गुरूणामुपधिं प्रतिलेखयति, ततो ग्लानशैक्षादीनां ततश्चात्मन उपधिं प्रतिलेखयतीति योगः ॥१२०॥ अथ स्थविरकल्पिकानामुपधिसंख्यामाह—

**पोत्तिय रयहरणं चिय कप्पतिगं सत्त पत्त उवगरणा। मत्तं च चोलपट्टो उवही थेराण चउदसहा ॥१२१॥**

स्थविरकल्पिकानामुपधिश्चतुर्दशधा भवति, तद्यथा—पोतिका १ रजोहरणं २ चैव कल्पत्रिकं ५ सप्त पात्रकोपस्करणानि १२ मात्रकं १३ चोलपट्टश्च १४ इति चतुर्दशधा उपधिः स्थविराणां, स चोत्कृष्टमध्यमजघन्यभेदात् प्रायश्चित्तादीनां कार्ये बोद्धव्यः, तथा उत्कृष्टाद्योपधेर्हि अप्रतिलेखनादौ प्रायश्चित्तं पृथक् पृथक् भवति, तत्र जिनकल्पिनां त्रयः प्रच्छादकाः पतद्ग्रहश्च एष उत्कृष्टः,

तथा गोच्छकः पात्रकस्थापनं मुखवस्त्रिका पात्रकेसरी चाद्यः–चतुर्विधो जघन्यः, पात्रबंधः पटलानि रजस्त्राणं रजोहरणं च एष मध्यमः, यदाहुः–उक्कोसगो जिणाणं चउव्विहो मज्झिमोऽवि एमेव। जहन्नो चउव्विहो खलु इत्तो थेराण वुच्छामि ॥१॥" तत्र स्थविराणामुपधिस्त्रेधा–उत्कृष्टो १ मध्यमो २ जघन्यश्चेति ३, तत्रोत्कृष्टः प्रच्छादकाः–कल्पाः पतद्ग्रहश्च, तथा जघन्यो गोच्छकः पात्रस्थापनं मुखवस्त्रिका पात्रकेसरी च, अथो मध्यमः–पात्रबन्धः पटलानि रजस्त्राणं रजोहरणं चोलपट्टः मात्रकश्च एष षड्विधो मध्यमः, संमीलिते चतुर्दश, यदाहुः–"तिन्नेव य पच्छागा पडिग्गहो चेव होइ इक्को सो। गुच्छग पत्तगठवणं मुहणंतय केसरि जहन्नो ॥१॥ पडलाइं रयत्ताणं पत्ताबंधो य चोलपट्टो य। रयहरण मत्तओऽविय थेराणं छव्विहो मज्झो ॥२॥ इह प्रस्तावादुपधेरेकार्थाः लिख्यंते, तत्र उपधिर्द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यतः शरीरं भावतो ज्ञानादीनि, तत्रोपधिः १ उपग्रहः २ संग्रहः ३ प्रग्रहः ४ अवग्रहः ५ भांडं ६ उपकरणं ७ करणं ८ एते एकार्थाः, यदाहुः–"उवही १ उवग्गहे २ संगहे य ३ तह पग्गहु ४-ग्गहे चेव ५। भंडग ६ उवगरणेऽविय ७ करणेऽविय ८ हुंति एगट्ठा ॥ १ ॥" तथा जिनकल्पिकानां द्वादशधा उपधिरुक्तः, तस्य जिनकल्पस्य जंबूतो दशकव्यवच्छित्तौ विच्छेद एव, यदाहुः–"मण १ परमोहि २ पुलाए ३ आहारग ४ खवग ५ उवसमे ६ कप्पे ७। संजमतिय ८ केवल ९ सिज्झणा य १० जंबूम्मि वोच्छिन्ना ॥१॥" 'मण'त्ति मनःपर्यायज्ञानं १ परमावधिः केवलावधिविचारी २ पुलाकलब्धिः, चुन्निज्जेत्तीत्यादिकः ३ आहारकतनुकरणलब्धिः ४ क्षपकश्रेणिः ५ उपशमश्रेणिः ६ जिनकल्पः७ संयमत्रिकं परिहारविशुद्धिः १ सूक्ष्मसंपरायः २ यथाख्यातरूपं च ३, ८ केवलं ९ सिद्धिश्च १० जंबूस्वामिनि विच्छिन्नाः, तथा आर्यकाणां–साध्वीनां पात्रादीनि पंचविंशतिरूपाणि उपकरणानि उत्सर्गतो भवन्ति, आह च–"जिणा चउदसरूवाणि, थेरा चउद-

रुकः परमूर्वोरंतरे उरुद्वये च कशाबद्धः, तथा अर्धोरुकः अवग्रहानन्तकः पदृश्च कटीभागमाच्छादयति ३ तथा जानुप्रमाणा चलि-
णी, साऽपि अस्यूता-सूचीसंगरहिता नर्तकीपरिधानवस्त्रसदृशी, लंखिका-वंशोपरिनर्तकी तत्परिधानवस्त्रवत्, यदाहुः-अद्धोरुओ व
ते दोऽवि गिण्हिय पच्छायए कडीभागं। जाणुपमाणा चलणी असीविया लंखियाइव्व ॥१॥ ४॥ अथ अभ्यन्तरनिवसनी, अंत-
र्निवसनी-अभ्यन्तरनिवसनी लीनतरा सुश्लिष्टा सूक्ष्मतरा अर्धजंघां यावद्भवति, बहिर्निवसनी-उपरि कटीभागात् गुल्फौ यावत्
कटीदवरकेन बद्धा, एष पड्विध उपधिर्नाभेरधो भवति ६, तथा कंचुकः, स च हृदयोद्भवाच्छादकः अनुकुंचितः श्लथः इत्थमेवाव-
कक्षिका दक्षिणे पार्श्वे भवति, यदाहुः-छाएइ अणुकुडए उररुहे कंचुए असीवियओ। एमेव य ओगच्छिय सा नवरं दाहिणे पासे
॥१॥ ८। अथ वैकक्षिका, वैकक्षिका पुनः पट्टवद्दीर्घा भवति ९। अथ संघाटी, ताः संघाट्यश्चतस्रो भवन्ति, एका द्विहस्ता द्वे
त्रिहस्ते एका चतुर्हस्ता, एवं च तत्र द्विहस्ता उपाश्रये प्रावियते, यदाहुः-"वेकच्छियओ पट्टो कचुंगमोगच्छियं च छाएइ। संघा-
डीओ चउरो तत्थ दुहत्था उवमयंमि ॥ १ ॥ दुन्नि तिहत्थायामा भिक्खट्ठा एग एग उच्चारे। ओसरणे चउहत्था निसन्नपच्छा-
यणी मसिणा ॥ १० ॥ तथा स्कंधकरणी, चतुर्हस्ता विस्तृता भवति, वातविधूनितनस्त्ररक्षार्थं च, यदाहुः-"खंधकरणी य चउ-
हत्थ वित्थडा वायविहूयरक्खट्ठा। खुज्जकरणी य कीरइ रूववईणं कुडहहेउं ॥११॥ अत्र आर्यकाणामुपधौ उत्कृष्टमध्यमजघन्यभेदा
अपि सन्ति, यदाहुः-"उक्कोसो अट्ठविहो मज्झिमओ होइ तेरसविहो य। जहन्नो चउव्विहो खलु अज्जाणं होइ विन्नेओ ॥१॥ तत्रो-
त्कृष्टोऽष्टविधोऽसौ-त्रयः प्रच्छादकाः-कल्पाः ३ अब्भितरनिवसनी ४ बहिर्निवसनी ५ संघाट्यः ६ स्कंधकरणी ७ पात्रकं च ८,
आह च-"तिन्नेव य पच्छागा अब्भितरबाहिनिवसणी चेव। संघाडी खंधकरणी पत्तं उक्कोसउवहिंमि ॥१॥ अथ मध्यमाह, स त्रयो-

दशधा–पात्रबंधः १ पटलानि १ रजस्त्राणं ३ रजोहरणं ४ मात्रं ५ उपग्रहानन्तकं ६ पट्टकः ७ अर्धोरुकः ८ चलणी ९ कंचुकः १० उपकक्षिणी ११ वैकक्षिकी १२ कमढकः १३, आह च–पत्तावंधो पडला रयहरणं मत्त मढक रयताणं। उग्गह पट्टो अद्धोरु चलणि ओकच्छि कंचु वेकच्छो ॥१॥ अथ जघन्यमाह–पात्रस्थापनं १ पात्रकेसरिका २ गुच्छकः ३ मुखवस्त्रिका ४ च, अयं चतुष्प्रकारः, आह च–"मुहपत्ती केसरियं पत्तठवणं च गुच्छओ चेव। एसो चउव्विहो खलु अज्जाण जहन्नओ उवही ॥१॥१२३॥

उक्तः औघिक उपधिः, औपग्रहिक उच्यते—

संथारुत्तरपट्टो लट्ठीपमुहो उवग्गहो उवही। फलहाइं पाडिहेरू आयपमाणा भवे लट्ठी ॥१२५॥

संस्तारकः तथा उत्तरपट्टकः–उत्तरीयवस्त्रं अन्यच्च यष्टिप्रमुखो–यष्टिप्रभृतिः सर्वोऽप्ययमौपग्रहिक एव, तथा फलहकानि–पट्टिकारूपाणि पाडिहेरूकश्च–कम्बलादिविशेषः, तत्रोपधौ यष्टिरात्मप्रमाणा, देहप्रमाणा भवेदित्यर्थः, यदाहुः–"लट्ठी विलट्ठी दंडो विदंडओ नालिया य पंचमिया। संथारुत्तरपट्टो इच्चाइ उवग्गहे उवही ॥१॥ लट्ठी आयपमाणा विलट्ठी चउरंगुलेण परिहीणा। दंडो बाहुपमाणो विदंडओ कक्खमित्तो अ ॥२॥ लट्ठीए चउरंगुलमूसिया दडपंचगे नाली। नइपमुहजलुत्तारे तीए थग्गिज्जए सलिलं॥३॥ बज्झइ लट्ठीए जवणियाइ विलट्ठीइ कत्थइ दुवार। घट्टिज्जइ य उवस्सयस्स तेणाइरक्खट्ठा ॥४॥ उडुबद्धंमि य दंडो विदंडओ घिप्पए वरसयाले। जं सो लहु ओलिज्जइ कप्पंतरिओ जलभएण ॥५॥ ॥१२५॥ अथ तस्मिन् दंडे सूत्रोक्तयुक्त्या गाथापंचकेन पर्वनियमं निरूपयति—

एगपव्वं पसंसंति दोपव्वा कलहकारिया। तिपव्वा लाभसंपन्ना चउपव्वा मारणंतिया॥१२६॥

**पंचपव्वा य जा लट्ठी पंथे कलहनिवारिणी । छपव्वा य आयंका सत्तपव्वा अरोगिया ॥१२७॥**

**अट्ठपव्वा असंपत्ती नवपव्वा जसकारिया । दसपव्वा उ जा लट्ठी तइयं सव्वसंपया ॥१२८॥**

**वंका कीडक्खइया फुल्लडया चेव तहय दड्ढा य । लट्ठी य उब्भसुक्का वज्जेयव्वा पयत्तेणं ॥१२९॥**

**दुट्ठपसुसाणसावयविज्जलविसमेसु उदयमग्गेसु । लट्ठी सरीररक्खा तवसंजमसाहिणी भणिया ॥१३०॥**

एकपर्वा—एककत्तलिकारूपां यष्टिं प्रशंसन्ति, पूर्वाचार्या इति शेषः, द्विपर्वा—द्वे पर्वे—कत्तलिके यस्यां सा द्विपर्वा तां कलहकारिकां-राटीकरणहेतुकां वदन्ति, त्रिपर्वा—त्रीणि पर्वाणि यस्यां सा त्रिपर्वा तां त्रिपर्वां लाभेन संपन्नां—लाभकारिकां भणन्ति, चतुष्पर्वां-चत्वारि पर्वाणि यस्यां सा चतुष्पर्वा तां चतुष्पर्वां मारणान्तिकां—प्राणत्यागकारिणीं वदन्ति ॥१२६॥ तथा पंच पर्वाणि यस्यां सा पंचपर्वा यष्टिः—दंडरूपा सा पथि—मार्गे कलहनिवारिणीं—राटीनिराकरिणीं कथयन्ति, षट् पर्वाणि यस्यां सा षट्पर्वा तस्याः सकाशात् करग्रहणयोगात् आतंको, भयं भवतीत्यर्थः, सप्त पर्वाणि यस्यां सा सप्तपर्वा सा आरोगिका—रोगाभावरूपा ॥१२७॥ अष्टौ पर्वाणि यस्यां सा अष्टपर्वा असंपत्—असंपद्योगाद् यष्टिरपि असंपत् उपचारात्, यथा दंडयोगात् पुरुषोऽपि दंडः, नव पर्वाणि यस्यां सा नवपर्वा यशःकारिका—यशःकर्तुं शीला, नवशब्दस्य अन्यार्थप्रतिपादकत्वात् संख्याशब्देन सह योगः अन्यथा (नवपर्वा) नवैवेत्यपि भवति, दश पर्वाणि यस्यां सा दशपर्वा तस्याः सकाशात् सर्वसंपदो भवन्ति॥१२८॥अथ अशुभलक्षणां यष्टिं वर्जयेदित्याह—एवंभूता यष्टिर्वर्जनीया, प्रयत्नेनेति योज्यं, कथंभूता?—वक्रा—असरला, कुब्जाकारेत्यर्थः, तथा कीटकभक्षिता—कीटकखादिता रेखादिना, फुल्लानि—शिखराणि यस्यां सा, तथैव दग्धा च यष्टिः, तावदूर्ध्वशुष्का—स्थानस्थितशुष्का, शुभलक्षणानि च यदाहुः—"घणवट्ट-

दिकृत्यः पश्चाद्गोचरचर्याप्रतिक्रमणकायोत्सर्गं करोति, आह च-"परिठविय पाणगाई विम्हरिउं वसहिवत्थपडिलेहं। काउं कुणंति गोअरचरियापडिकमणउस्सग्गं ॥१॥ अत्र कायोत्सर्गे-कालो गोअरचरिया थंडिल वसहि वत्थपत्तपडिलेहा। संभरई सो साहू जस्सवि जं किंचि उवउत्तं ॥१॥ इयं गाथा चिन्तनीया, तथा यत्किंचिदनाचरितं क्रियाकृत्यं तत् स्मृत्वा-हृदि चिन्तयित्वा प्रायश्चित्तमालोचनारूपं विदधाति-करोति ॥१३३॥ अथ दैवसिकप्रतिक्रमणकालनिर्णयमाह—

**तो पडिकमई सूरे अद्धनिवुड्डे जहा भणइ सुत्तं । संमत्ते पडिकमणे ताराउ वि तिन्नि दीसंति ॥१३४॥**

**चेइयवंदण भयवं सूरिउवज्झायमुणिखमासमणा । सव्वस्सवि सामाइय देवसियइयारउस्सग्गो ॥१३५॥**

ततः प्रतिक्रमणसमये प्राप्ते प्रतिक्रमणं तथा करोति यथा सूर्ये-रवौ अर्द्धनिर्ब्रूडिते विम्बे प्राप्ते सूत्रं-प्रतिक्रमणसूत्रं भणति-कथयति, समाप्ते-परिपूर्णे प्रतिक्रमणे-आवश्यके ताराः-तारकाः द्वे तिस्रो वा दृश्यन्ते, आह च-"अद्धनिवुड्डे सूरे सुत्तं कड्ढंति नवरि गीयत्था। इय वयणपमाणेणं देवसियावस्सए कालो ॥१॥ अहवावि पडिकमणे पुन्ने ताराउ तिन्नि दीसंति। देवसियं आवस्सियमेयं तुलिऊण कुव्वंति ॥२॥ पुव्वाभिमुहा उत्तरमुहा व आवस्सयं पकुव्वंति । सिरिवच्छमंडलीए अहवा परिवाडिमंडलिए ॥३॥ १३४॥ अथ दैवसिकप्रतिक्रमणं निरूपयति—तत्रादौ चैत्यवंदनं-अरिहंतचेइयाणमित्यादि पश्चात् चत्वारि क्षमाश्रमणानि भगवान् सूरिः उपाध्यायः मुनिरित्यादिरूपाणि, तदनु भून्यस्तमस्तकः 'सव्वस्सवि देवसिय'इत्यादि भणति, तदनु ज्ञानादिषु चारित्रं गरिष्ठं तेनादौ चारित्राचारविशुद्ध्यर्थं सामायिकं-'करेमि भंते! सामायिक'मिति सूत्रं पठति, तस्मात् कायोत्सर्गे एकोनविंशदोषरहिते प्रातस्त्यायाः प्रतिलेखनायाः प्रभृति-दिवसातिचारांश्चेतयति मनसा संप्रधारयेच्च तस्मादसौ दैवसिकातिचार उत्सर्गः ॥१३४॥ तर्हि अत्र ते

क्षमाश्रमणपूर्वमेव बोद्धव्यं, कृतवन्दनः पश्चात् पादैरवग्रहाद् बहिर्निःसृत्य 'आयरिउवज्झाए' इति गाथात्रयं पठति, केषांचिन्मते न पठंति च ॥१३६॥ तदनु प्रतिक्रमणे को विधिर्विधेयः इत्याशंक्याह—

**चरणाइतिउस्सग्गा तेसु उज्जोअचिंतणं कमसो। सुअदेवयाइथुइओ पुत्ति च्चिय वंदणा तिथुई ॥१३७॥**

तदनु चारित्रादयः—चारित्रदर्शनज्ञानप्रभृतयः त्रयः कायोत्सर्गाः तेषु क्रमशः—अनुक्रमेण द्वौ एक एकः पृथक् उद्योतचिन्तनं, चतुर्विंशतिस्तवचिन्तनं, यदाहुः—दुन्नि य हुंति चरित्ते दंसणनाणे य हुन्ति[इक]इको य। सुयखित्तदेवयाए थुइ अंते पंचमंगलयं ॥१॥ तदनु श्रुतदेवतादिस्तुतयः, ततश्च गणनिश्रायाः अस(ज्झा)या उहडावणिय कायोत्सर्गः, तस्मिन्नेकनमस्कारचिंतनं, ततः पोतिकाप्रतिलेखनं ततः कृतिकर्म—वन्दकं दत्ते, पश्चात् 'इच्छामो अणुसट्ठिं' इति भणित्वा जानुभ्यां स्थित्वा कृतांजलिर्नमोऽर्हत्सिद्धेति पूर्वकं स्तुतित्रयं पठति, तत्र साध्व्यस्तु नमोऽर्हत्सिद्धेति न पठन्ति, तदर्थश्चायं—इच्छामः—अभिलपामः अनुशास्ति—श्रीगुर्वाज्ञां प्रतिक्रमणं कार्यमित्येवंरूपां, तां च वयं कृतवन्तः स्वाभिलापपूर्वकं, यदाहुः—"पुत्ती वंदणदाणे भणन्ति भालयलमिलियकरजुयलो। इच्छामो अणुसट्ठि गुरुथुइगहणे थुई तिन्नि ॥१॥ अत्र 'नमोऽस्तु वर्द्धमानाय' इत्यादि अभावे वा 'संसारदावानले'त्यादि स्तुतित्रयं पठन्ति ॥१३७॥ एतस्मादपि किं विधेयमित्याह—

**सक्कत्थय पायच्छित्त सज्झाओ इय दिणस्स पडिकमणं। तं पुण पक्खियमाईसु अह्लियावणियपज्जंते ॥१३८॥**

तदनु शक्रस्तवपाठः 'नमुत्थुण'मित्यादि, ततः स्तोत्रे निरूपिते दिवसप्रायश्चित्तकायोत्सर्गो विधेयः, तस्मिन् चतुर्विंशतिजिनस्तवचतुष्कं चिन्तनीयं, एकमेकं पञ्चविंशत्युच्छ्वासमयं, अत्रान्तरे गणनिश्रया कायोत्सर्गादिविशेषस्वरूपं स्वयं बोद्धव्यं, पश्चात्

स्वाध्यायः, इति 'गतं दिवसस्य प्रतिक्रमणं,' दैवसिकप्रतिक्रमणं गतमित्यर्थः यदाहुः—"देवसियपडिकमणे कयंमि गिण्हंति तयणु कयकरणा। तारातियसंपेक्खणसमए पाओसियं कालं ॥१॥ पियधम्मो दढधम्मो संविग्गो चेव वज्जभीरू अ। खेयन्नो य अभीरू कालं पडिलेहए साहू ॥२॥ अह वाघाइयकाले सुद्धंमि पढंति कालियं सुत्तं। पुव्वगहियं गुणंति य अन्नह अन्नंपि अत्थं वा ॥३॥ कालियसुअस्स कालो भणिओ अज्झयणगुणणविसयाइं। दिवसस्स पढमपच्छिमजामा एवं तिजामाए ॥ ४ ॥ इक्कारस अंगाइं कालियसुत्तं वयंति तत्तन्नू। दिट्ठीवाओ सव्वो न होइ कालियसुअं नियमा ॥५॥ ततः पुनः पाक्षिकचातुर्मासिकसंवत्सरेषु अयमेव विधिर्वक्ष्यमाणः ॥ अथ पाक्षिकप्रतिक्रमणं गाथायुग्मेन निरूपयति—

**पोत्तिचियवंदमालोयणं च पक्खियगसुत्तसुत्तं च। वंदण पत्तेयं खामणं च वंदणय सामइयं ॥१३९॥**

**मूलोत्तरगुणसोही उस्सग्गुज्जोअ पुत्ति वंदणयं। पज्जंतखामणाणि य पुणोऽवि पडिक्कमइ देवसियं ॥१४०॥**

अत्र दैवसिकप्रतिक्रमणवंदनानन्तरं पाक्षिकमुखवस्त्रिकां प्रतिलिख्य वंदनकं च दत्त्वा पाक्षिकमालोचनं विधेयं, आलोचिते च पाक्षिकचातुर्मासिकसांवत्सरिकादिषु चतुर्थषष्ठाष्टमरूपं तपो देयं, पश्चात् पाक्षिकसूत्रं, पुनस्ततोऽपि प्रतिक्रमणसूत्रं, पश्चात् वंदनकं, पश्चात् प्रत्येकं क्षामणं, संबुद्धा क्षामणमिति 'जं किंचि अपत्तियं' इत्यादि पठति, तत्र जघन्यतस्त्रयः साधवः क्षाम्यन्ति, उत्कर्षतः सर्वेऽपि, यदाहुः—"देवसियचउम्मासियसंवच्छरिएसु पडिक्कमण मज्झे। मुणिणो खामिज्जंति तिन्नि तहा पंच सत्त कमा ॥१॥ ततोऽपि गुरुरूर्ध्वीभूय प्रत्येकक्षामणकं च कारयति, ततः पुनरपि वंदनं, पश्चात् करेमि भंते! सामाइयं पठन्ति ॥ १३९ ॥ तत्पठिते मूलोत्तरगुणशुद्धये—मूलोत्तरगुणविशोधनार्थं करेमि कायोत्सर्गं, ततः उच्छ्वासशतत्रयमानं कायोत्सर्गं कुर्वन्ति, द्वादशवा-

रांश्चतुर्विंशतिस्तवं चिन्तयतीत्यर्थः, सर्वेऽपीति शेषः, पारिते चतुर्विंशतिस्तवमुच्चैरुत्कीर्त्य मुखवस्त्रिकां प्रतिलिख्य वंदनकं च दत्त्वा पर्यन्तक्षामणाः क्षाम्यन्ते-समाप्तिक्षामणाः क्रियन्ते, अहमपि क्षाम्यामीति गुरोर्वाक्यं, पाक्षिकक्षामणाचतुष्टयं कुर्वन्ति, तत्र इच्छामि खमासमणो इत्यादिपूर्वकं पियं च मे जं भे इत्यादि पठति, अथ द्वितीयं-इच्छामि ख० पुव्विं चेइयाइं इत्यादि, अथ तृतीयं-इच्छामि ख० अब्भुट्ठिओहमित्यादि, अथ चतुर्थं-इच्छामि० कयाइं च इत्यादि, ततः परिहारेण आत्मानं संक्षिप्य निःस्तारकाः परेषां पारगा आत्मानः संसारसमुद्रात् भवतेति गुरुवचनं, शेषं सर्वं स्पष्टम् । अत्र संग्रहगाथा-अहमवि खामेमि तुब्भे तुब्भेहिं समं मत्थएण वंदामि । आयरिय संति नित्थारपारगउ गुरूण वयणाइं ॥ १ ॥ उत्तानार्थेयं, एवं गतं पाक्षिकं, अनयैव परिपाट्या चातुर्मासिकं सांवत्सरिकं च, नवरं तत्र पंचशतोच्छ्वाससमानः कायोत्सर्गः, विंशतिवारांश्चतुर्विंशतिसूत्रं चिन्तयन्तीत्यर्थः, तथा सांवत्सरिके अष्टोत्तरसहस्रश्वासः कायोत्सर्गः, चत्वारिंशतं वारान् सनमस्कारांश्चतुर्विंशतिरूपांश्चिन्तयन्तीत्यर्थः, ततः पुनरपि दैवसिकं प्रतिक्रामति, सर्वत्रायमेव विधिः ॥१४०॥ अथ चतुर्विंशतिस्तवस्य पाक्षिकादिषु संख्यामाह—

पक्खे बारस चउमासिएसु वीसं तहा वरसियंमि । उस्सग्गे चालीसा सनमुक्कारा य उज्जोया ॥१४२॥

पक्षे-पाक्षिकप्रतिक्रमणे द्वादश चातुर्मासिके विंशतिः सांवत्सरिके चत्वारिंशत् उद्योतकाः सनमस्काराः, उत्सर्गे-कायोत्सर्गे इति सर्वत्र योज्यं, यदाहुः-"सायसयं गोसद्धं तिन्नेव सया हवंति पक्खंते । पंच सया चउमासे अट्ठसहस्सं च वरिसंमि ॥१॥ आह च-"चत्तारि दो दुवालस वीसं चत्ता य हुंति उज्जोआ । देसियराइयपक्खियचाउम्मासे य वरिसे य ॥२॥ किं च-तथा भवनदेवतायाः क्षेत्रदेवतायाः कायोत्सर्गं कुर्वन्ति, प्रतिक्रमणप्रान्ते च अजितशान्तिस्तवं पठन्ति, आह च-चउमासिय वरिसिए य आलोअणा-

ऽऽलोए ॥ ७ ॥ इच्चाइ चिंतयंता निद्दामुक्खं करंति खणमित्तं । तत्थवि निब्भरनिद्दं पमायभीरू विवज्जंति ॥८॥ तथा विधिकृतसंस्तारकस्थितः चैत्यानि-शाश्वतचैत्यानि वन्दयित्वा जिनान् अपरान् अनुमरति ॥१४३॥ अथ अत्र कान् जिनान् अनुसरति तदाह—

**नंदीसर अट्ठावय सित्तुंजय उज्जयंत सम्मेयं । पमुहाइं तित्थाइं वंदेऽहं परमभत्तीए ॥१४४॥**

तत्र तीर्थं स्मरणीयं अष्टमद्वीपे नंदीश्वरवरे द्वीपे द्विपंचाशत् प्रासादाः, मतान्तरे विंशतिश्च, तत्र चतुःषष्टिशताष्टचत्वारिंशद् अशीत्यधिकचतुर्विंशशतं वा विम्बनमस्कारकरणं, ततोऽष्टापदस्मरणं, स च अयोध्यातो द्वादशयोजनैः प्रमाणांगुलनिष्पन्नैः, तथाऽत्र अष्टापदनामा पर्वतः कोशलावासिजनक्रीडनस्थानं, तस्मिन् श्रीभरतचक्रिकारितं अष्टापदनाम चैत्यं शाश्वतं वर्तते, तस्मिंश्च चतुर्मुखे प्रासादे चत्वारः अष्टौ दश द्वौ च जिनेश्वरा वंदनीयाः, यथा पूर्वद्वारे ऋषभाजितौ, दक्षिणदिग्द्वारे संभवादिपद्मप्रभान्ताश्चत्वारो जिनाः, तथा पश्चिमद्वारे सुपार्श्वाद्या अनन्तपर्यन्ता अष्टौ तीर्थकराः, तथोत्तरदिग्द्वारे धर्माद्या वीरजिनपर्यन्ता दश जिनवरा विजयन्ते, तेषां स्मरणं विधेयं, इह श्रीउत्तराध्ययने अष्टादशाध्ययने भरतवक्तव्यतायां इदं भणितं, यदाहुः—"एयं पुन्नपयं सोच्चा, अत्थधम्मोवसोहियं । भरहोऽवि भारहं वासं, चिच्चा कामाइं पव्वए ॥ १ ॥ तथाहि—अत्थि उवज्झाए नयरीए सिरिउसभनाहपढमपुत्तो पुव्वभवकयमुणीयणवेयावच्चनिवत्तियचक्किभोओ भरहो नाम चक्कवट्टी, तस्स नवण्हं निहीणं चउदसरयणाणं बत्तीसाए महानरवइसहस्साणं छखंडस्स य भरहस्साहेवच्चं करेंतस्स वत्थाहारदाणेण सामीवच्छलं कुणमाणस्स उसभजिणनेव्वाणगमणाणंतरं च सयं कारियअट्ठावयसिहरसंठवियजिणाययणपट्ठावियाणं नियनियवन्नपमाणोववेयाणं उसभाइचउवीसजिणपडिमाणं वंदणच्चणं समायरंतस्स अइक्कंता पंच पुव्वलक्खा, तथा च श्रीआवश्यकनिर्युक्तौ द्वितीयनखरिकायां मूलसूत्रे—थूभसय भाउयाणं चउवीसं चेव जिणघरे

प्रसन्नं-प्रसन्नचंद्रं मेतार्यमुनिं शालिमुणिं-शालिभद्रं दढकुमारं च मुनिं ॥१४६॥ तथा धन्नाभिधं-धन्नमुनिं दशार्णभंद्र चिलातीपुत्रं उदायनं जंबूस्वामिनं सुदर्शनं स्थूलभद्रं अवंतिसुकुमारं वज्रादीन्-वज्रस्वामिप्रभृतीन् मुनीनहं वन्दे-नमस्करोमीति सर्वत्र योज्यम् ॥१४७॥ अथ तद्भवविहितमधिकरणमालोचयति—

**जं अइयभवनिबद्धं अहिगरणं जेण जाव न हु कज्जं। तमिह मए वोसिरियं देहपमायंमि पुण सव्वं ॥१४८॥**

यद् अतीतभवनिबद्धं-गतभवोपार्जितमधिकरणं-क्रोधादिलक्षणं येन हु निश्चितं यावन्न कार्यं-नो विधेयं तद् इह मया विसृष्टं, क ?-देहप्रमादे-निद्रारूपे पुनः सर्वं-सकलमपि ॥१४८॥ अथ त्रिविधमनोव्यापारमिथ्यादुष्कृतं तनुते—

**जो मे धम्मविरुद्धो जाओ मणवयणकायवावारो। मिच्छामिदुक्कडं तस्स पुणरवि मा हुज्ज पावमई ॥१४९॥**

यो मम मनोवचनकायव्यापारो धर्मविरुद्धो जातः तस्य मिथ्यादुष्कृतं भवतु, तथा पुनरपि पापमतिर्मा भूयाः ॥ १४९ ॥ अथ चतुःशरणाश्रितां भावमतिं चिन्तयति—

**सव्वे अम्ह पसत्था सउणा सुअणा गहाइ नक्खत्ता। तिहुअण मंगलहिययं हियएण जिणं वहंताणं ॥१५०॥**

सर्वे-समग्राः शकुनाः स्वजना ग्रहा नक्षत्राणि चास्माकं प्रशस्ताः-प्रसन्नाः, कथंभूतानामस्माकं ?-हृदये-उरसि जिनं-वीतरागं वहतां-धारयतां, कथंभूतं जिनं ?-त्रिभुवनमंगलकं भूर्भुवःस्वर्मांगल्यम् ॥१५०॥ अथ तत्र सम्यक्त्वतत्त्वं चिन्तयति—

**अरिहं देवो गुरुणो सुसाहुणो जिणमयं मह पमाणं। इय सम्मत्तविसुद्धो धम्मो मे होउ सइ सरणं ॥१५१॥**

तत्र इति, सम्यक्त्वविशुद्धः-सम्यक्त्वनिर्मलो धर्मः मम सदा-सततं शरणं भवतु, तत् सम्यक्त्वं किं ?-यत्र देवोऽर्हन् गुरवः

दि-

# श्री ऋषभदेवजी केशरीमलजी पेढी मुकाम रतलाम.

सुयनाणं महिड्ढीयं



शास्त्रं सर्वत्रगं चक्षुः

जैनबन्धु प्रिंटिंग प्रेस, इन्दौर

४००० ]

[ विक्रम सं० १९८४